❀ श्रीहरिः ❀

# अन्योक्तिमुक्तावलिः

रचयिता

महामहोपाध्याय पं० रामशास्त्रिभागवताचार्य स्वामी
( भूतपूर्व काशीस्थराजकीयसंस्कृतपाठशालाध्यापकः )

सम्पादिका

कु० गायत्रीदेवी एम० ए०

प्रथमावृत्तिः ] संवत् २०१८ वि० [ मूल्यं सपाद १। रूप्यकम्

अन्योक्तिमुक्तावलिः



ग्रन्थरचयिता-महामहोपाध्याय पं० भागवताचार्यः

जन्म सं० १९१६ वि० ] [स्वर्गवास सं० १९७० वि०

# प्रकाशकीयनिवेदनम्

अभ्युपगतसारस्वतभास्वद्वैभवेन समुपलब्धविद्वन्मण्डला-लघुयशसा समाराध्येन तातपादेन महामहोपाध्यायेन स्वर्गीय-श्रीभागवताचार्येण स्वामिना अलालंकारिकसरणिमनुसृत्य विर-चितानि साम्प्रतिकयुगप्रयोजनसाधकानि ग्रन्थरत्नानि प्रकाश्य वयममन्दानन्दमनुभवामः ।

अतः पूर्वं "समस्यासमज्या" नामको ग्रन्थः प्रकाशं गतः संस्कृतज्ञसमाजे प्रख्यातकीर्तिश्चेति नाविदितं बुधजनैः । फलतः संस्कृतविश्वविद्यालयेषु प्रोक्तग्रन्थः साहित्याचार्यपरीक्षासु सहा-यकग्रन्थतया स्वीकृतः प्रचुरं प्रचारं च प्राप्तः ।

साम्प्रतं विमलशेमुषीजुषां विदुषां गुणैकपक्षपातिनां चेतसां हार इव प्रस्तुतोऽयम् "अन्योक्तिमुक्तावलि" नामा ग्रंथः सहृदयहृदय-सिक्तग्रन्थिः स्वप्रतिद्वन्द्विनमलभमान इव समुपजृम्भते । आशास्महे यदयं संस्कृतसाहित्यशास्त्रिपरीक्षायाः पाठ्यग्रन्थस्याभावमपि निराकरिष्यति ।

रचयितुर्भगवद्दशावतारप्रशंसात्मको "भवभेषजा"भिधोऽन्यो ग्रन्थो मुद्रणालये वर्तते । यस्य स्तुतयो भक्तजनानां करुणा-पूर्णहृदयाह्वानवायुवेगेन समालोडितकरुणावरुणालयाः सत्यो भगवदासनमपि कम्पयितुमलम् ।

## प्रकाशनार्हा रचयितुरन्ये ग्रन्थाः—

(१) नयकमलाकरः ( त्रयोदशशतश्लोकात्मको नीतिग्रन्थः )।

(२) कादम्बरीवरीयस्ता ( कादम्बर्या उत्तरार्द्धस्य विशदा टीका, पूर्वार्द्धस्य च विस्तृतटिप्पणीभिः समं जटिल-संदर्भस्फोटनम् )।

(३) हरविजयकाव्यटिप्पणी ( सुविस्तृता )।

(४) कुमारचरितचारुता—( दशकुमारचरितस्य टीका )।

(५) काव्यप्रकाशस्य दोषोद्धारः।

(६) भारतचम्पूटिप्पणी।

(७) सुवृत्तरत्नावली ( प्राचीनसंस्कृतकवीनां स्वरूपवर्णनसंवद्धं काव्यम् )।

(८) श्रीतातचरणालोकः ( स्वकौटुम्बिकजीवनवृत्तान्तमयं काव्यम् )।

ये महानुभावा उक्तग्रन्थरत्नानामाशु प्रकाशनाय सहायका बुभूषन्ति ते साक्षात्कारेण पत्रव्यवहारेण वा मां कृतार्थ-यन्तु। इति शम्—

२०५, सूर्यकुण्डम्, वाराणसी<br>
गंगादशहरा, सं० २०१८ वि०

विदुषां विधेयः,<br>
श्रीदेवाचार्यः

# वाङ्मुखम्

—❀—

अथ खलु पदवाक्यप्रमाणपारावारैर्वेदान्तसांख्ययोगधर्मशास्त्रसाहित्याचार्यैर्महामहोपाध्यायैः सर्वतन्त्रस्वतन्त्रैः पितामहपादैः श्रीरामशास्त्रिभागवताचार्यस्वामिभिः प्रणीतस्यास्यानुपमग्रन्थरत्नस्यान्योक्तिमुक्तावलिनामकस्य मुद्रितसंस्करणं तत्रभवतां विदुषां सम्मुखे समुपस्थापयन्नहमत्यानंदमनुभवामि । यद्यपि स्वनाम्नैवास्य ग्रन्थस्योपादेयता प्रकटीभवति तथापि साहित्यशास्त्रकोविदा इमं पठित्वैव निर्णेष्यन्ति यदयमन्योक्तिमुखेन मम्मटोक्तं षड्विधं काव्यप्रयोजनं सम्पादयति न वा । वस्तुतः समाजव्यवहारनिपुणतामेवान्योक्तीनां प्रयोजनमनन्यतया स्वीकृत्य ग्रन्थकारेणायं ग्रन्थो निरमायि । अत्र हि साधारणतया जीवनस्य जगतो ज्ञातव्यानां पदार्थानां प्राकृतिकसुषमाशीलोपादानपुरःसरं स्वरूपं प्रकटयितुं तेषामुपरि मार्मिका अन्योक्तयः कृताः सन्ति या सर्वथैव जिज्ञासमानानां पाठकानां लोकानुभवाय काव्यनिपुणतायै चात्यन्तं साहाय्यकृतः । संस्कृतसाहित्येऽन्योक्तीनां परः सहस्राणि पद्यानि यत्र-तत्र न समुल्लसन्तीति न; किन्तु पुस्तकाकारेणान्योक्तीनां निबन्धनं नाधिकं प्रतिभाति । पण्डितराजजगन्नाथप्रभृतिभिः कतिपयैः काव्यमर्मज्ञैरस्यांदिशि यः प्रयासः कृतः स एव साभारं संस्कृतज्ञैरभिनन्द्यते। भामिनीविलासप्रभृतीन् ग्रन्थान् तत्तत्परीक्षासु निर्धार्य कृतज्ञता परिपाल्यते च । आवश्यकता त्वीदृशी यदधुनापि संस्कृतोन्नायकैरस्यां दिशि प्रयासो विधेयो, विहितश्च प्रयासः श्लाघनीयो मन्तव्यः । इयमन्योक्तिमुक्तावली विषयबहुलतया स्वीयविशिष्टतया च विद्वत्कृतं सभाजनं प्राप्तवती, साहित्यपरीक्षासु पाठ्यग्रन्थगौरवं गतवती पूर्वोक्तस्याभावस्य पूर्तिं करिष्यतीति सतां सकाशादाशास्महे ।

पूज्य पितामहचरणा वाराणसीस्थक्वीन्सकौलिजनामकराजकीयविद्यालये १८८६ ईशवीयाब्दतः १९१२ ईशवीयाब्दपर्यन्तमध्यापनकार्यं कृतवन्तः ।

-तत्रैव ते नानाविधान् विषयान् पाठयन्तः साहित्यस्याध्येतॄणां छात्राणां हितकाम्यया ग्रन्थमिमं व्यरचयन्। अस्मिन् पुस्तके कतिपयानि पद्यानि केषांचिज्जनानां छात्राणां चानुरोधान्निर्मितानि सन्ति। अनेकानेकग्राम्य-दृश्यानां पदार्थानां यथातथ्येन वर्णनं चित्रवदत्यद्भुतमाभाति। विषय-सूच्येवास्य ग्रन्थस्यैतत्तथ्यं ज्ञापयितुमलं यद्विद्यार्थिनां कृते ज्ञातव्यानां समस्त विषयाणां संग्रहणे ग्रन्थकारो दत्तावधानः वरीवृत्यते। पठनेन चास्य पुस्तकस्येदमपि प्रस्फुटं भविष्यति यदस्य निर्मातुः कोषज्ञाने, शब्दानां व्याकरणसंमताद्भुतप्रयोगे, काव्यगतरीत्यादौ च कीदृशो विलक्षणोऽधिकार आसीद् यद्बलेनासौ प्राचीनकाव्याचार्याणामस्मिन् कालेऽपि विच्छिन्न-प्रायां विच्छित्तिपूर्णरचनाशैलीं पुनरुज्जीवितुं सक्षमः संजातः।

यावदुपसंहर्तुम्, प्रस्तुतपुस्तकस्य सम्पादने रचयितुर्मूलप्रतिरेव प्रमाणी-कृता। परन्तु तस्या यत्र-तत्र बहुशः खण्डिततया ग्रन्थकाराभिप्रेतपाठस्या-नुसन्धाने प्रयासो मदीय एव। एतेन यदि कुत्रचित् काचित् त्रुटिर्जाता भवेत्तर्हि सहृदयानां विदुषां पार्श्वे क्षमामुपयाचेऽपरं चाशासे यदस्माकं लघुप्रयासमिमं बहु मन्यमानास्ते ग्रन्थकारस्यान्यानप्यप्रकाशितग्रन्थान् प्रकाशयितुं नः प्रोत्साहयिष्यन्ति। अन्यच्च यानि कानि संशोधनानि विच-क्षणा प्रेषयिष्यन्ति तानि सादरं विचारणीयानि तथा द्वितीयसंस्करणे कर्तव्यतयोपन्यस्तानि भविष्यन्तीति।

गङ्गादशहरा, सं० २०१८ वि०

गायत्री

( सम्पादिका )

❀ श्रीगणेशायनमः ❀

❀ श्रीसरस्वत्यै नमः ❀

श्री कविकुलकमलदिवाकर-पदवाक्यप्रमाणपारावारीण-
महामहोपाध्याय-वेदान्त-साङ्ख्ययोग-धर्मशास्त्र-
साहित्याचार्य-रामशास्त्रिभागवताचार्य-स्वामिनः

# संक्षिप्तजीवनवृत्तान्तः

—:❀:—

गणेशं कामदं वन्दे भक्तरक्षणतत्परम् ।
सर्वकार्यसमारम्भे सुरासुरनमस्कृतम् ॥१॥
शारदां सर्वदा वन्दे शारदेन्दुसमप्रभाम् ।
ज्ञानप्रदां दयामूर्ति वरदां जगदम्बिकाम् ॥२॥
माहेश्वरीं सर्वजगन्निवासां काशीश्वरीं शङ्करदत्तहस्ताम् ।
प्रसन्नवक्त्रां शिवदां शिवां तां नमामि देवीमहमन्नपूर्णाम् ॥३॥
भजे प्रपन्नार्तिहरं महेश्वरं सुरासुरार्चितपादपङ्कजम् ।
अणोरणीयांसमजं पिनाकिनं कृपार्द्रचित्तं महताम्महत्तमम् ॥४॥

अस्ति दक्षिणपञ्चालेषु सुरधुनीपवनपावनीकृतपरिसरं गाधिप्रभृतिनरेन्द्रैः प्रतिपालितम् शीलसदाचारविद्याविनयसौन्दर्यघनसम्पन्नजनैर्व्याप्तं भवभूति-राजशेखरश्रीहर्षादिभिः प्रकाशितवैदुष्यविभवं तपःस्वाध्यायनिरत-पांडित्य-विनयविभूषितद्विजकुलमण्डितं कान्यकुब्जापरपर्यायं नगरम् । तत्र अज्ञात-कालाल्लब्धसदाचारपाण्डित्यप्रकर्षं तिरवा-ठठिया-विष्णुगढादिसामन्त--पूजितपादपङ्कजं कश्यपगोत्रं सिउर इत्युपाधियुक्तं आवसथिककुलं वसति स्म । तत्र भवः स्वाध्यायपाण्डित्यलब्ध-नैपश्चिती-प्राप्त-प्रतिष्ठः श्रीभगवन्त नामा विद्वद्वर्यः वघेलवंशोद्भवेन ठठियाधिपेन सबहुमानमाहूय इक्षुमत्या-

दक्षिणे क्रोशमात्रस्थिते भदौसीग्रामे दत्तजीविको निवासितः। तदन्वये 'श्री वन्ध' नामा बुधोऽजायत। स सदाचरणनिरतः शास्त्रकुशलः प्रान्त-जनतादत्तसत्कारः संसारमसारं पश्यन् प्रायः भदौसीग्रामाद्योजने आंकिन-ग्रामसमीपे गङ्गादक्षिणतटस्थितायां 'आभार्यस्वामि' गुहायां भगवद्ध्यानेन कालमनैषीत्। तस्य चतुर्षु पुत्रेषु ज्येष्ठः श्रीबालकृष्णाचार्यः विद्या-ध्ययनव्यसनी पितुः सकाशात् ठठियानिवासिश्रीचतुर्वेदिश्रीसहायसका-शाच्च प्राप्तव्याकरणादिविद्योऽपि विशेषजिज्ञासुः फतेहपुरचौरासीनिवा-सिनः नवद्वीपाधीतदर्शनशास्त्रस्य श्रीजनार्दनाचार्यस्य पादसरोजमूलं गत्वा दर्शनशास्त्रे योग्यतां सम्पादितवान्। श्रीजनार्दनाचार्यस्तु गुरुशुश्रूषया बुद्धि-विभवेन च सन्तुष्टान्तरङ्गः सन्नस्मै स्वरहस्यं दर्शनशास्त्रं ब्रह्मविद्योपदेशं वैष्णवधर्मदीक्षां वैष्णवधर्माचार्यत्वञ्च ददौ।

प्राप्ताचार्यानुज्ञः श्रीबालकृष्णाचार्यः गृहमागत्य पितुर्निदेशेन विवाहं सम्पाद्य गृहस्थाश्रमं प्राविशत्। ततः आगरानगरे पनिहरीघट्टस्थिते कस्मिंश्चिन्मन्दिरे स्थितायां पाठशालायां केनचिदाढ्यचतुर्वेदिना सबहुमान-मध्यापकः कृतः।

किञ्चित्कालानन्तरं शरीरस्यास्वस्थतया पित्रा गृहमानीय नीरोगः कृतः। ततः पुनः तत्रगमनोत्सुकः पितुर्निरोधात् पितुः सकाशात् साङ्गोपाङ्गमायुर्वेदम-धीत्य स्वतन्त्रजीविकः सन् विदेशगमनान् निवारितचित्तः प्रान्ते एव प्रान्तीय-जनैः उपासितः संसारे च विरक्तः किञ्चित् कालं तस्थौ। ततः लोके ख्यातिं प्राप्य तत्र तत्र जनैः सादरं नीयमानः चिकित्सार्थं भगवद्धर्मोपदेशार्थं च क्षणमिव कालं निनाय। तस्य पुत्रत्रयेषु ज्येष्ठः केदारनाथोऽभूत्, कनिष्ठः कुलशेखरोऽभवत्, तृतीयस्तु मध्यमः श्रीरामशास्त्रिभागवताचार्यः स्वामी प्रादुर्बभूव।

अस्य महानुभावस्य जन्म वै० संवत् १६१६ ( शके १७८१ ) ज्येष्ठ शुक्लतृतीयायां शनौ यू० पी० प्रान्तीयफर्रुखाबादजनपदस्य भदौसीग्रामे आसीत्। तस्य बाल्ये एव बुद्धिविभवं दृष्ट्वा पित्रा बाल्यात्प्रभृति स्वस-

काशी एव निहितः । पित्रा दत्तशिक्षः पितरि लब्धप्रेमप्रकर्षो मातरि विद्यमानायामपि पित्रा सह परदेशगमनेऽपि हृष्टचित्तः बाल्यं सुसुखं निनाय । ततः रीवाँनरेशमहाराजरघुराजसिंहदत्तमानेन रीवाँराज्यजनताशुश्रूषितचरणकमलेन पित्रा सह रीवाँनगरे राज्येऽपि किञ्चित् कालं सुखमुवास ।

ततः तातः स्वदत्तप्रारम्भिकशिक्षमेनं रीवाँराजकीयपाठशालायां दाक्षिणात्यमहादेवचरणकमलेषु समर्पितवान् । अस्य विलक्षणां मेधां विद्यानुरागं विचित्रां प्रतिभां च निरीक्ष्य द्रवीभूतान्तःकरणो गुरुरात्मीयां सकलां सकलां विद्यां स्वल्पेनैव कालेन साशीर्वादमस्मै ददौ । श्रीबालकृष्णाचार्यस्तु षोडशे वर्षे एव विवाहदीक्षां फर्रुखाबादमण्डलान्तर्गतसकरावाग्रामे निरवर्तयत् ।

ततः कृतविवाहोऽपि विंशतिवर्षवयस्कः काशीमागत्य काशिकराजकीयसंस्कृतपाठशालायां प्रधानाध्यापक-सर्वतन्त्रस्वतन्त्र-महामहोपाध्याय-श्रीराममिश्रशास्त्रिणां चरणसरोजेषु सान्निध्यमकरोत् । पाठशालां प्रविश्य व्याकरणशास्त्रे मध्यमां परीक्षां च दत्तवान् उत्तीर्णश्च । अस्य शास्त्रीयप्रतिभाकृष्टचित्तः श्रीराममिश्रः सबहुमानमेनमद्राक्षीत् । महामतिः श्रीभागवताचार्य इङ्लैण्डनिवासि-आङ्ग्लजानसननामानं शिष्यं पाठयन् तस्मात् प्रतिमासं दशरूप्यकसाहाय्यं प्राप्य शास्त्रीययोग्यतां संवर्धयन् गृहात्पत्नीमप्यानीय काश्यां सुखमुवास । ततः वर्षपञ्चकेन वेदान्त-साङ्ख्ययोग-धर्मशास्त्र-साहित्यशास्त्राणामाचार्यपरीक्षाः दत्त्वा तेषु सर्वशास्त्रेषु उत्तीर्णः सर्वाधिकाङ्कप्राप्तिमूलकपदकानां द्रव्यमेव व्ययार्थं जग्राह । १८८२ तमे ईशवीयेऽब्दे साहित्यशास्त्रपरीक्षां, १८८३ तमे ईशवीयेऽब्दे सांख्ययोगशास्त्रे, १८८५ तमे ईशवीयेऽब्दे वेदान्तशास्त्रे, १८८६ तमे ईशवीयेऽब्दे धर्मशास्त्रे च परीक्षां ददौ, उत्तीर्य चाचार्यपदवीं प्राप । ततः मत्सरप्रज्वलितान्तःकरणैर्विद्वद्भिरयमन्वर्थां षट्शास्त्रीयविज्ञतां मा लभत, इति आचार्यपरीक्षा षट्सु खण्डेषु विभाजिता, प्रति-

वर्षमेकस्यैव खण्डस्य परीक्षां दातु जनः समर्थः इति निश्चयः कृतः । ततः प्रतिरुद्धगतिः व्याकरणादिशास्त्रेषु परीक्षां दित्सुरप्ययं विरराम ।

ततः पुरन्दरपुरातिथौ जाते श्रीवेचनराममिश्रपाठिनि दर्शनाध्यापके, तदीय-स्थाने काशिकराजकीयपाठशालायां १८८६ ईशवीयेऽब्दे दर्शनाध्यापकपदं लेभे । ततः जानसनदत्तां जीविकां तत्याज । असौ छात्रावस्थायामध्यापन-कालेऽपि च अनेकग्रन्थानां संशोधनं कृत्वा मुद्रणं कारयामास । खण्डन-खाद्यं च स्वसहाध्यायिकुलयशस्विशास्त्रिनाम्ना संशोध्य तस्य भूमिकां स्व-नाम्ना कृत्वा मुद्रणमकारयत् तथा मोहनरामनामउदासीनस्य स्वमित्रस्य जीवनचरितं तथान्यग्रन्थांश्चालिखत् । तेषां नामानि परिचयोपेतं 'प्रकाश-कीयनिवेदने' दत्तानि ।

एषु श्रीभाष्यभूमिका यदा लिखिता तदा श्रीभाष्यग्रन्थो लाजरस-प्रेसे मुद्रणार्थमासीत् । मुद्रणसमये एव श्रीभागवताचार्यः ( १९७० विक्र-माब्दे आश्विन शुक्ल दशम्यां तिथौ ) परमधामं ययौ । अस्य शिष्येण जानसनेन तस्याः कृतिः स्वनाम्ना मुद्रापिता । एष १९०८ ईशवीये संवत्सरे भारतसम्राजा महामहोपाध्याय पदेन समलङ्कृतः । अस्यैका पुत्री, एकश्च सुतः श्रीदेवाचार्य इदानीं वर्तते ।

सः शालप्रांशुः, महाबाहुः, परिणद्धकन्धरः, अंशलः, कपाटविस्तीर्ण-वक्षस्थलः, रोमशकर्णः, मेघगम्भीरनादः, सत्यवादी, गजेन्द्रगामी, न्यायप्रियः, सदाचाररतः, निर्मत्सरः, श्रीरङ्गाचार्यदत्तवैष्णवदीक्षः, ईश्वरसंसक्तचेताः, परमवैष्णवः, अवकाशेऽपि अध्यापनशीलः, रात्रि दशवादनपर्यन्तं विद्यार्थि-समूहपरिपाठनरतः सर्वशास्त्रपाठनदक्षः, शास्त्रार्थलब्धसाधुवादः, पण्डितसभा-गृहीतसत्कारः, देशान्तरव्याप्तशिष्यप्रशिष्यः, दिगन्तविश्रान्तकीर्तिस्त्रयोविंशति-वर्षपर्यन्तं काशिकराजकीयविद्यालये चणमिव विद्यादानमकरोत् ।

---

# सूचीपत्रम्

—:※:—

# शुद्धिपत्रम्

—:ॐ:—

| पृष्ठम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १ | १८ | वर्ही | वर्ही |
| ५ | ४ | मिदमद्यं··· | मिदमद्य मया गृहीतम् ॥४॥ |
| ५ | ६ | ॥४॥ | ॥५॥ |
| ६ | १२ | मंखरान्धिता | मुंखरान्धिता |
| ७ | २ | जितं | र्जितं |
| ७ | १५ | कीत्ति | कीर्त्ति |
| ७ | २२ | वामनः | वामनः |
| ८ | ७ | वक्त्र | वंक्त्र |
| ८ | १३ | करिसरः प्रतिवाचः | करिसद्ः प्रतिवाचः- |
| ६ | १६ | विभपि | विभर्षि |
| ६ | २१ | कि | किं |
| ११ | ७ | कुञ्जरोजित | कुञ्जरोर्जित |
| ११ | २२ | य द्विहरसे | यद्विहरसे |
| १३ | १० | दिगन्ता | र्दिगन्ता |
| १७ | ४ | राजहंसासि | राजहंसोसि |
| १७ | ७,८,१०,१२ | व्रत | व्रत |
| १७ | २४ | तथा कृथा | तथाऽकृथा |
| १६ | २२ | व्रवे | ब्रूवे |
| २० | ६ | व्रहि | ब्रूहि |
| २० | १० | स्वच्छदं | स्वच्छन्दं. |

| | | | |
|---|---|---|---|
| २० | १२ | प्रिय सख | प्रियसख |
| २० | १८ | ऽम्युपायः | ऽभ्युपायः |
| २१ | १८ | तादृगऽद्य | तादृगद्य |
| २२ | १ | दूरर्शिता | दूरदर्शिता |
| २२ | २१,२३ | मधुन्नत | मधुव्रत |
| २३ | १५ | या मूर्ध्ना | यो मूर्ध्ना |
| २३ | १७ | भ्रमन्मारवे- | भ्रमन्मारवे |
| २४ | १२ | सर्पः | सर्पः |
| २४ | १७ | विश्रमाम्यर्थिनो | विश्रमाभ्यर्थिनो |
| २५ | ५ | ॥२॥ | ॥१॥ |
| २५ | ७ | ॥३॥ | ॥२॥ |
| २५ | १४ | राधवः | राघवः |
| २६ | ११ | वाबात्सि | वाबात्सि |
| २६ | १६ | सङ्कुचन् | सङ्कुचन् |
| ३० | २ | कूलपद्रुमे | कल्पद्रुमे |
| ३८ | ४ | दृशोदृपी | दृशोदृशी |
| ३८ | २० | विश्र मद्रुम | विश्रमद्रुम |
| ४० | ६ | सुमनः परिषद्धरत्वम् | सुमनःपरिषद्धरत्वम् |
| ४४ | १६ | छीहारि | छीहारि |
| ४६ | २२ | हृदि | हृदि |
| ५० | ६ | तल्लाघमान | तल्लघिमान |
| ५० | २३ | धत्तरः | धत्तूरः |
| ५२ | २ | दन्दघि | दन्दग्धि |
| ५२ | १० | युक्तद्भमुवयुजो | युक्तमुद्भवयुजो |

———

श्रीहरये नमः

# अन्योक्तिमुक्तावलिः

## मङ्गलाचरणम्

त्वं तावन्मुदिरोरसि क्षणरुचे संरोचसे प्रत्यय-
स्त्वय्यस्य त्वनवग्रहक्षणरुचौ कः, किन्विदेयं चरेत्।
विभ्रान्ते मरुतां वशात्क्षणरसोल्लासे च नाथश्रियो-
रित्यन्योन्यविलासहाससरसा सूक्तिर्व्यनक्तु प्रियम् ॥१॥

## ब्रह्मा

जनानां विश्वस्मिन्कनकरजतादिप्रतिकृती-
र्विनिर्मातुं तावत्कति कति न सन्तीह कृतिनः।
स एकः किन्त्वऽस्मिञ्जयति जनताप्राणनविधौ
विधाताऽसौ वेधा हरिसरसिजाभ्यन्तरचरः ॥१॥

## शिवः

यद्विरक्तिमपि नाटयसि त्वं योषिता च परिणद्धनिजाङ्गः।
यच्छिवः पितृवनेषु च सङ्गीतीश्वरोऽसि चर यद्यदभीष्टम् ॥१॥

गां वाहनं तव विभीषयते गजास्य-
स्तं चाद्रिराजतनयाप्रिय एष सिंहः।
तन्मूषकं त्वहिरिमं शरजन्मवर्ही
धन्या गृहस्थितिरियं भगवँस्तवाऽऽस्ते ॥२॥

## आकाशः

शून्यं केचिदशून्यमन्य, उपरीत्येके, सितं चापरे,
कृष्णं चापि भवन्तमाहुरपि तु त्वाऽऽकाश मन्यामहे।
शब्दानां प्रभवश्च कश्चन भवान् विश्वावकाशप्रदो
दूरः पङ्ककलङ्कसङ्करमयैर्दोषैरशेषैरसि ॥१॥

## वायुः

त्वय्येवाऽऽयतते समस्तजगतामात्मप्रतिष्ठोदयो
विश्लेषे क्षणमप्यथाऽश्मनिभताभाजस्तव प्राणिनः।
संवर्गेति सदागतीति मरुदित्याऽऽम्नायसे च श्रुता-
वेष त्वं पवमान चेत्तु बिभृषे दुर्वासनां किं ब्रुवे ॥१॥

पवमान! भवन्तमन्तरेण प्रभवन्तीह न जन्तवो भवाय।
स भवान्यदि दक्षिणोऽथ वामः शरणं सर्वजनस्य सर्वथाऽऽस्ते ॥२॥

अयि गन्धवह! स्फुरद्भुजङ्गस्फुटफूत्कारिमुखेन सङ्गतोऽपि।
हरिचन्दनसौरभैकसारो यदसि त्वं तदिदं हि दक्षिणत्वम् ॥३॥

श्रीमत्सरोजमकरन्दरसानजस्रं
तेऽमी स्वदन्तु भवतो ननु चञ्चरीकाः।
भावत्कसौरभविसारणमात्रहेतो-
रेते वयं त्वदुपगा ननु गन्धवाहाः ॥४॥

रे दुष्प्रभंजन! मुधा किमु धावमानः
पाथोधरं तृषितचातकचञ्चुपुट्याम्।
वारां निवारयसि वर्पुकमत्र धारां
हा राम राम तव तावति का नु हानिः ॥५॥

भूमिर्भ्रमति भूरुहावलिरियं भावैकसन्देहभाक्
किं ब्रूमः खलु चातकेष्वहह यन्माभूत्सपत्नेऽपि तत्।

अस्मिंश्चावसरे घनाघनमभीवर्षाय बद्धोद्यमं
व्यर्थं व्यर्थमपास्थ इत्थमिह रे किं मातरिश्वन्नहो ॥६॥

व्याजृम्भमाणरजसा नयनोपघातं
वावाहि तूलकचयान्क्षिप विक्षिप त्वम् ।
वेगं गृहाण विगृहाण सुनिर्भरं भो
वातूल ! तूलकचयो न शिलोच्चयस्तु ॥७॥

## तेजः

भक्ष्याभक्ष्यविवेकाद्दूरंगतोऽप्याश्रयाशश्च ।
धिक् शुचितां तव वह्ने ननु सत्यं कृष्णवर्त्माऽसि ॥१॥
येऽमी जलोपप्लवतः प्रयान्ति तेजःप्रहाणिं शुचयः परे ते ।
अन्यः पुनर्वाडव एष योऽसौ तेजोऽधिकं धारयते जडेषु ॥२॥

## जलम्

यत्तत्प्राथमिकप्रथापरिगतं सर्गेऽत्र विश्वेशितु-
र्यत्तज्जीवनमाऽऽमनन्ति जगतां पापोपतापापहम् ।
तत्तत् त्वं महिमा तव त्रिजगतीक्रोडे परिक्रीडते
त्वं चेन्नीचपथेषु पान्थसि सखे पाथः प्रमाथः परः ॥१॥
रे रे तरलितवृत्ते जलतरलं किं तटस्थमारामम् ।
प्रतिभासयसि जनानां जानाति बुधः स तत्त्वं ते ॥२॥

## पृथिवी

तवैव यदिदं किमप्यभिनिरीक्ष्यते पुत्रकम्
त्वमेव च महाम्बुधावुपधृता जगद्भूतये ।
त्वमेव तदुपेक्षयाऽद्य यदि* वा व्यतिक्लाम्यसे
धरित्रि ननु कुत्र तज्जगदिदं तु विश्राम्यतु ॥१॥

---

* पाठा० 'यदधुना व्यतिक्लाम्यसे' ।

## सूर्यः

उद्यन्तु नाम शतशो ग्रहतारकौघाः
किं तेन, येन तु तमांसि न विद्रुतानि ।
धन्योदयः कमलिनीमलिनीकराणां
व्याजृम्भमाणतमसां विनिबर्हणोऽर्कः ॥१॥

वदामः कैर्वाक्यैः प्रकृतिमहतो विश्ववलय-
प्रतिष्ठाहेतोस्तं कमपि महिमानं दिनकृतः ।
द्विजेशो यस्यासौ सततकृतपादग्रहवशात्
प्रचाकाशीतीन्दुः स्फुरदमृतसारैकसरसः ॥२॥

उलूकश्चेत्कश्चिच्छकुनिरवलोकं न भजते
तथाऽऽलोकालोकावधिविसृमरालोककृदसौ ।
जगच्चक्षुर्देवो निखिलजनजीवातुचरितः
करोतूपायं कं तदिह भगवानम्बरमणिः ॥३॥

तारकास्तमसि लब्धवृत्तयः सन्तु नाम सततं सहस्रशः ।
किन्तु सन्ततंतमःसमापनं नैद्रविद्रवकृतैव भास्वता ॥४॥

## चन्द्रः

क्षीराब्धिप्रभवः सुधारसमयः श्रीसोदरो ब्राह्मणा-
धीशश्चारुकलाकलापकलितश्चेशेन मूर्ध्ना धृतः ।
कः कस्ते न गुणोऽत्र चन्द्र हृदयं बध्नाति किंवा बहु-
व्याहारैर्भवतैव यत्कुवलयामोदः सदोज्जृम्भते ॥१॥

तत्तादृक्खरचण्डदीधितिकरव्याबाध्यमानं जग-
ज्जाग्रःप्राग्रतरैः सुधारसभरैरुज्जीवयस्यञ्जसा ।
किं ब्रूमो बहु वोदये कुवलयं कृत्स्नं तवोल्लासते,
श्रीमँश्चन्द्र चकाधि चाधिकमिह त्वं विश्वनेत्रोत्सवः ॥२॥

ग्रावद्रावणकर्मकर्मठ कलानाथ त्वया नन्दने
नाऽऽनन्दीह पयः पयोधिरधिकं तद्विश्वतो विश्रुतम् ।

एते चाश्नुवतेऽभितापविकला लोकास्तवैवोदया-
दानन्दं, कमलाकरस्य तु कृते कोऽयं विचित्रो विधिः ॥३॥
मित्रप्रवासविकलेषु पयोरुहेषु कान्तावियोगविधुरेषु च चक्रकेषु ।
आरब्धमस्ति यदिदं, तव तत्सुधांशो दोषाकरत्वमिदमद्य मया गृहीतम्
तत्तादृशं दधदिह द्विजराजभूयं यद्वारुणीपरिनिषेवणमभ्युपागाः ।
किं ब्रूमहे तव तदत्र निशेश यद्वा दोषाकरस्य भवतः कियदेतदास्ते ॥४॥

## कुबेरः

धन्यो धनाधिनाथाशेषाणामीशिषे निधिगणानाम् ।
यस्य हि भवतः स सखा भिक्षाचर एष बम्भ्रमीति शिवः ॥१॥

# अथ नराः

## अगस्त्यः

कुम्भोदराजितजनुर्ननु हेलयैव
वारांनिधिं चुलकयेदिति को नु वेद ।
वातापिनिर्जरणनिर्जरनैजभूमे-
स्त्वं तु स्वतस्तदकथा मनसोऽप्यगम्यम् ॥१॥
ब्रूमः कैर्ननु कुम्भसम्भव भवद्भूमानमेतेऽक्षरै-
र्यस्यादेशवशंवदो विचलितुं नाद्यापि विन्ध्यः क्षमः ।
येनाऽऽचान्तवताऽम्बुधिं निजकरक्रोडे परिक्रीडिता-
वीशानौ विनिभालितौ त्रिजगतां मीनश्च कूर्मश्च तौ ॥२॥

## कुविन्दः

मृदुलोज्ज्वलचित्रसद्गुणाढ्यैर्ननु नग्नक्षपणावृतेऽत्र देशे ।
किमु कन्दलितैः कुविन्द तावत् सिचयानां निचयैः प्रयास्यसि त्वम् ॥१॥
विचित्रमृदुलोज्ज्वलाकृतिरियं, सुसत्यं, तव
क्व सा समुचिता परं, क्विमिह दुर्गतग्रामके ।

परश्शतदिगम्बरक्षपणकैकवारस्तव्यके
कुविन्द किमु विन्दसे गुणगणप्रतानैः श्रमम् ॥२॥

## दीपदर्शकः

त्वं दर्शयसि परस्मै पन्थानं दीपदर्शक ! स्थाने।
स्वयमहह बन्धुरे त्वं पदमर्पयसे पुनः स्थाने ॥१॥

## चित्रकरः

ते ते सन्ति परश्शतास्तव गुणग्रामाभिरामादरा-
स्तान्विश्वान्व्यतिहाय विश्ववलये त्वं जागरूकानहो।
हंहो चित्रकलाकलापनिपुण प्राणानिहाऽऽशोषयन्
किं चित्रव्यतिलेखनव्यतिकरैरन्धेषु निर्बन्धभाक् ॥१॥

## कैवर्त्तः

झंझाभिर्मुखरान्विता दश दिशो व्याघूर्णिता नौरियं
शोणो दुर्मदयादसां निधिरयं स्मो धन्वनित्या वयम्।
त्वय्येवाऽऽहितनिर्भराः परममी कैवर्त्त वर्त्तामहे
मध्ये मज्जय वा तटं गमय वा यत्सांप्रतं मन्यसे* ॥१॥

तीर्थाधिवासनिरतोऽस्ति पवित्रपात्रा-
वेत्तापरोऽस्ति परमोऽस्ति च पारदर्शी।
लोकप्रतारक इति श्रुतवानुपागा-
मद्याऽध्यगाञ्च ननु धीवर तादृशं त्वाम् ॥२॥

## मालाकारः

मालाकार तदाऽकृथा निजकरैः पुन्नागपारम्परीं
दूरादेव जहद्ग्रहेण महता सेवां तथा बर्बरे।

---

* पाठा०—'यन्मन्यसे साम्प्रतम्' अथवा 'यत्साम्प्रतं साम्प्रतम्।'

एतादृक् फलसम्पदः परिणतास्तस्मात्पशूनामपि
स्पृश्या या न किमत्र वाग्भिरधुना भुङ्क्ष्वाजितं यत्तदा ॥१॥
भो सिञ्च सिञ्च पिचुमन्दतरुं सुसिञ्च
त्वं सर्पिषा च पयसा मधुनाऽधुनाऽमुम् ।
शुष्यद्रसालनिवहं प्रविहाय, काले
द्रष्टाऽस्मि भोः कथमसौ भविता रसालः ॥२॥

## व्याधः

हे साधो मृगयो मुहुर्मुहुरिह त्वं धीरधुर्याग्रणी-
र्धीरं गायसि कस्य न श्रवणयोः सिञ्चन्सुधामाधुरीम् ।
किन्त्वस्मिन्मृगपोतकस्तु रसिकस्त्वद्गीततो वागुरा-
कृष्टो दैववशाद्विमुक्तिमगमत्त्वां वन्दते दूरतः ॥१॥

## महिषपृष्ठस्थो बालः

उद्दण्डदण्डकर कर्षकबाल ताव-
च्चण्डोऽसि रे महिषपृष्ठतलप्रतिष्ठः ।
कीनाशकीर्त्तिमपि चार्जय कश्चनाऽसा-
वन्यः खलैकदमनः शमनस्तु देवः ॥१॥

## मत्स्याजीवी

एको निष्करुणो रुणध्मि विविधान्निष्कारणं प्राणिनः
काँश्चिज्जालगुणान्वितस्य सततं तीर्थेऽत्र विश्वासयन् ।
मास्मैवं हृदये करोरनुशयं त्वं जालजीविञ्छुचौ
तीर्थे भावजनाय नो कति कति द्रोहव्रतास्त्वत्सखाः ॥१॥

## वामनः

वामनाऽस्ति भवतः कृते कियच्चन्द्रमण्डलमिदं विदूरतः ।
वामनेन ननु विक्रमक्रमाद्विश्वमेव बलितो वशीकृतम् ॥१॥

### पान्थः

यत्पान्थ काञ्चनसरूपसुमप्रपञ्चं
कञ्चिद्विलोक्य खलु रत्नफलाभिलाषात् ।
आसेचनादिभिरुपाश्रितवान्किणद्रुं
युक्तो झणञ्झणरवोऽस्य तदद्य तुभ्यम् ॥१॥

### नटः

तैस्तैस्तैर्वक्त्ररागैरवसरविहितैर्वेषभाषाविशेषै-
स्तेषां तेषां जनानां जनय बहुमतिं देशकालादिभेदात् ।
रामो वा रावणो वा भव जनहृदये नाटकैर्नैकरूपै-
र्यस्त्वं शैलूष तत्त्वं तदिह बुधजनाः किन्तु जानन्ति तावत् ॥१॥

### ग्राम्यः

कीदृशोऽस्त्युभयतो धृतपुच्छः कस्य कर्षकनतेर्महिषोऽयम् ।
गोप कर्षति कथं च हलं वेत्यत्र काः करिसदः प्रतिवाचः ॥१॥

### तालारोहकः

उत्तालं विनिभाल्य तालमपि च स्थूलं फलं दूरत-
श्चारोहग्रहिलेन मूढमनसा यत्साहसं स्वीकृतम् ।
भ्रातस्तत्र फलं तु दूरमिव ते नूनं निपातः पुनः
प्रत्यासन्नतरः पदे विचलिते प्राणप्रयाणावधिः ॥१॥

## अथ पशवः

### सिंहः

अक्षिभ्रुवं ननु तदेव, तदेव चास्यं,
ते केसराश्च, नखराश्च खरायितास्ते ।
सत्यं मतङ्गजघटोत्कटकुम्भकूट-
कुट्टाकता तु घटतां क नु चित्रसिंहे ॥१॥

गेहेषु बालिशजनः खलु खेललीला-
मालेख्यकेसरिवरेण करोतु कामम् ।
माद्यन्मतङ्गजघटेव तु वेद यादृग्
यावच्च यच्च ननु केसरिणोऽस्ति तत्त्वम् ॥२॥

दिग्दन्तावलमण्डलं सकृदपि स्वैरं यदीयोद्धत-
ध्वानाकर्णनवग्रहग्रहिमदप्रस्यन्दिकुम्भाम्बुदम् ।
बोभोतिस्म, तदद्य हा हरि हरि क्रूरो हि कालक्रम-
स्तस्यैवात्र हरेः पदे ननु शिवाफेत्कारकोलाहलः ॥३॥

यद्गन्धेन मदान्धसिन्धुरघटाः संरम्भसंभाविताः
प्राणत्राणपरायणा दिशि दिशि प्रापन्न वा विश्रमम् ।
तेनाऽकाण्डपरापतन्नटविटैर्बद्धेन सिंहीभुवा
लोकक्रीडनकात्मतापरिणतेः प्राणाः प्रहीणाः पुरः ॥४॥

मदडुर्दिनवारिवाहवीरोद्भटमातङ्गघटाऽप्यटाट्यताऽहो ।
न पुरो ननु यस्य फेरवस्तं हरिराजं जरसा हसन्ति शान्तम् ॥५॥

## गजः

किं दानमानमतिमात्रमरे बिभर्षि
स्तम्बेरमाऽन्धितदृशा चलकर्णतालः ।
यद्भुञ्जते शिरसि ते विनिधाय पादं
षट्पाद एव मधुपा मलिनाः समन्तात् ॥१॥

रे रे मत्तमतङ्ग व्रज झगित्येव प्रदेशादितः
किं कोलाहलमुद्भटं प्रकटयन्नेवं परिक्राम्यसि ।
सम्प्रत्येव चिरात्कथंकथमपि स्वापोन्मुखो वर्तते
हृष्यद्वारणगण्डमण्डलमहावैतण्डिकः केसरी ॥२॥

येनासीत्सुषमा नरेन्द्रभवने व्याघूर्णितान्दोलिना
संग्रामेषु जयक्रमश्च परमो यत्राऽऽयतिष्टाऽनिशम् ।

सोऽयं गन्धमतङ्गजोऽद्य समयाज्जातो जराजर्जरो
हा हा प्रेक्षकलोकलोचनपथे भारायते किं ब्रुवे ॥३॥
सर्वेऽमी वनवासिनस्तव पुरोऽवस्थातुमप्यक्षमाः
किं ब्रूमो निरवग्रहां मदझरीं यद्गन्धसम्बन्धतः।
लीयन्ते गिरिकन्दरेषु करिणोऽप्यन्ये, गजेन्द्राऽस्ति तत्
पारीन्द्रात्पृथुकादपीह भवता भाव्यन्तु भव्यार्थिना ॥४॥
वारंवारमरेऽत्र वारणपते गोदावरीवारिणि
प्रारभ्य व्यतिगाहनव्यतिकरं यत् क्रीडसि क्रीड तत्।
विस्मार्षीर्ननु मास्म केसरिपतेः किन्तु प्रतीरोद्भटा-
रण्यानीवसतेर्मदान्धगजता कुम्भस्थलस्थास्नुताम् ॥५॥
पुण्यारण्यविहारहारिणि लसद्गङ्गातरङ्गावली-
निष्णाते गिरिकन्दकन्दरचरे त्वय्येवमाजीवति।
वद्धो दुष्टकरेणुसङ्गतिवशान्नव्यांघ्रिघातान्सहन्
हे सारङ्ग सखे सखेद इभराट् कस्मादकस्मादयम् ॥६॥

राजाधिराजकुलभूषणभूतवासो
　　लोकस्य लोचनपथेऽभ्युदयोऽयसारते।
स्वच्छन्दविन्ध्यविहृतेरिह यूथनाथ-
　　स्तम्बेरमस्य परमः परमेष खेदः ॥७॥

यूथाधिनाथ ननु नाथसि सान्द्रसान्द्रां
　　छायां तरोः कलिलतापतपर्त्तु पूर्त्तां।
रूपानुरूपमिह नो तव तत्तु, कुत्र
　　विन्ध्याद्रिशृङ्गमहतो भवतो निवेशः ॥८॥

रे रे नवोद्गतमदाकुलपोतक त्वं
　　किं विश्रमार्थमभिलष्यसि भूरुहालिम्।
नो सम्प्रति स्मरसि तत्कृतमात्मकर्म
　　स्वैरं महीरुहविटङ्कविभञ्जनानि ॥९॥

सर्वे यथायथममी वनवासिनोऽस्मिन्
दीर्घे निदाघसमये गमयन्ति तापम्।
नागाऽन्यभव्यपरपादपपादमूले
क्वाऽऽस्तेऽतिमानवशतो भवतो निवेशः ॥१०॥

मदोन्मदशिलीमुखस्फुरितहस्तहरितैस्त्वया
जिताः खलु परःशता अहितहस्तिनो वस्तुतः।
परं दनुजकुञ्जरोर्जितरणैकजैत्रक्रमो
हरेर्विदितविक्रमोऽश्रुतचरः किमैरावतः ॥११॥

## वृषभः

श्रीसौरभेय ऋषभ त्वमिदं कदापि
माऽन्तः कृथा ननु वृथा किमहं प्रयासैः।
क्लेशं भजे भवति धूर्वहतैकभाजि
विश्वं सुजीवति, कथं तदिहाऽन्यथाऽऽस्ताम् ॥१॥

धौरेय धीर धवलोद्धतकन्धरस्त्वं
सम्प्रत्यहो किमिव मन्थर मन्थरोऽसि।
प्रावीवृतं कमपि भारमनन्यसाध्यं
स्कन्धं त्वयैव ननु दत्तवताऽव्रताऽमुम् ॥२॥

## अश्वः

तादृग्राजकुलैकभूषणचरो मन्दादरो मन्दुरा-
वस्थानेष्विह धूलिधूसरतनुर्विस्मृत्य गत्यन्तरम्।
कूटावस्करकेषु चक्रकगतिश्चारुन्तुदं शब्दयँ-
श्चक्रीवत्तु चिराय य द्विहरसे गन्धर्व किं ब्रूमहे ॥१॥

## रासभः

रे रासभातिरभसेन समुन्नमय्य
तुण्डं प्रचण्डमिह गर्दसि गर्द बाढम्।

चैत्यात्रहेतुरहमित्यभिमानतस्त-
न्मृद्वाहनैर्घटकृताऽन्यथितोऽसि रे त्वम् ॥१॥
भीष्मग्रीष्मे म्लानविम्लानकान्तिः
सर्वा भूमिर्भस्मसाद्वोभवीति।
चञ्चच्चण्डैस्तैः खरांशोः करौघै-
र्नृत्यन्तोऽमी* मोदमग्नाः खरास्तु ॥२॥
साधु रासभ सुसाधु रासभ प्रोन्नमय्य ननु तुण्डमीदृशम्।
ईदृशेषु मृदुशब्दकर्मसु त्वां विना प्रभवतीह कोऽपरः ॥३॥
रे रे रासभ सैंहीं त्वचं वसानो विभासि सिंहस्त्वम्।
क्षेत्रे विहर विशङ्कातङ्क तूष्णीकतुण्डः सन् ॥४॥

## मृगः

करिणोऽपि यत्र चरणप्रचारिकां
मनसाऽपि नाचरितुमीश्वराः† परम्।
मदनिर्झरस्फुरितदीप्तिभूधरा
हरिकन्दरे हरिण तत्र मा भ्रमीः ॥१॥
मृग यासि कुत्र, मृगराजसन्निधौ,
ननु केन, जीवनविशेषवाञ्छया।
ननु तादृशानि कति वा वनानि नो,
मृगराजनामनि तु मास्म विश्वसीः ॥२॥
मृग निर्गतोऽसि वलदुर्गतस्ततः
किमु वा हरेर्गहनकन्दरोदरात्।
प्रतिगाश्च गाश्च ननु तत्र मा पुन-
र्मृगतैव ते जयति तत्र कारणम् ॥३॥

---

* पाठान्तरम्—'नृत्यन्तोऽस्मिन्'। † 'मीशते परम्'—पाठान्तरम्।

ननु कूर्दनं तव विलोक्य लोचने हरि-
रामिमीलदिति किन्तु दुर्बलः ।
प्रतिगाः कथंचिदपि वञ्चकैः स्म मा
परिवञ्चितश्च मृग मैव गाः पुनः ॥४॥
एषोऽहं गिरिकन्दरोदरचरः स्वच्छन्दकन्दाङ्कुरै-
र्वर्ते, नास्य विराद्धमण्वपि मया तन्मे कुतोऽस्माद्भयम् ।
अद्धा नैव विराद्धमस्य भवता त्रातो भवेः किन्त्वितः
सारङ्ग व्यपयाहि लुब्धकजनो नो न्यायवद्धादरः ॥५॥
श्रीमन् पुष्कलक प्रवल्गसि वनोपान्तेषु कान्तक्रमं
किञ्चापूरयसि स्फुरत्परिमलाऽपूरैर्दिगन्तान्मुहुः ।
आस्तां तन्ननु पश्य निर्घृणहृदो हिंसाविहारादरा
एते पामरलुब्धकाः प्रतिचरन्त्येभ्योऽवधेयं परम् ॥६॥

## महिषः

शृङ्गाक्षेपपरम्पराभिरभितो यत्क्षीयतेऽसौ जन-
स्तत्ताहक्तरसप्रसादमपि यन्नामावशेषं व्यधाः ।
भूयस्तामरसावलीञ्च विपुलां यद्व्याक्षिपन्वर्तसे
हंहो सैरिभ सौरभाय भवतो भूयान् सुभव्यः क्रमः ॥१॥

## उष्ट्रः

दासेरकं त्यजत रे ननु दूरदूरान्
मा बालकाः कुतुकतो निकटेऽस्य यात ।
यं 'दन्तकोटिकुटिलेऽत्र धरत्यकाण्डे
तुण्डे स संयमनिकाऽतिथिरेव गण्यः ॥१॥
एते जगत्सु विदिता ननु वञ्चका ये
ज्वालामुखा बलिभुजोऽत्र शिवात्मवादैः ।

दासेरकोल्लसितपिस्सितजिह्वया भो-
स्तालध्यहो च्छलितवानसि विभ्रमय्य ॥२॥
दासेरको गणयतीह न कञ्चनापि
तावत्समुन्नततया निजसम्मुखेऽन्यम् ।
यावन्न याति जलदावलिवेल्लितस्यो-
पान्ते तदक्ष्यति यतस्तु महीभृतोऽसौ ॥३॥
ईदृक् स्थगुस्थगितपृष्ठतटोऽतिदीर्घ-
ग्रीवाद्भुतोऽसि मरुलब्धजनिर्ननु त्वम् ।
दासेरक त्वयि तथा कृतवान्विधाता
तादृक्षमेव खलु कण्टकभोगसौख्यम् ॥४॥

## तरक्षुः

गलच्छङ्कातङ्कं किमिह हरिण क्रीडसितमा-
मसौ सिंहोऽस्तीति व्यवसितहृदा बालसुलभम् ।
अरे नास्य चौद्र्य कलयसि ननूत्कालरसिको
ददानश्चक्षुर्यस्त्वयि, स तु तरक्षुः खलु परः ॥१॥

## सूकरः

यूथाधिपो भवसि मेचककायधारी
दन्तद्वयाङ्कुरितदीर्घकतुण्डहारी ।
स्थूलश्च पल्वलजलेषु शरीरधावो
नो सूकरोऽस्ति सुकरस्तदपीभभावः ॥१॥

## श्वा

उच्चैरलर्क भष रे भष निर्विशङ्कं
ग्रामीणलोकनिवहे वह सिंहभावम् ।
माद्यन्मतङ्गजघटोत्कटकुम्भकूट-
कुट्टाकपाणिनखरो हरिरस्ति जोषम् ॥१॥

स्नेहोपचाररुचिरं सुचिरं प्रयत्ना-
त्संसेवितस्य सरलीकृतये सुसाधु ।
सद्यः श्वपुच्छ पुनरेव तथा स्थितिस्ते
तस्मिन्य एष भवतः सरलत्वमिच्छुः ॥२॥

### शृगालः

येनाऽभ्यासिपतावलेहनहृदा मातङ्गयूथाधिराट्-
क्ष्माभृत्स्फारमदाम्बुनिर्भरशिरः शृङ्गाणि शश्वत्तराम् ।
पारीन्द्रप्रवरे तु कालवशतः स्वर्गाय बद्धोद्यमे
तस्मिन्फेरव रोरवीपि यदिदं तत्ते स्वरूपोचितम् ॥१॥
दिग्दन्तावलगण्डभित्तिशिखरे योऽसौ चपेटामदात्
तस्मिन्वञ्चक चेदुदञ्चयसि रे बाहुं चपेटोत्कटम् ।
तर्त्तर्हि त्वयि किं ब्रवीतु स पुनः पञ्चाननः कानना-
न्तेपु प्रथय प्रथामवजितः पञ्चाननो नस्त्विति ॥२॥
मदोद्दृप्यद्यूथाधिपकरटिकुम्भस्थलतटो-
च्छलन्मुक्ताप्रोक्तप्रखरनखरव्यूहमहिमा ।
स तूष्णीमेवास्ते गिरिकुहरगर्भे मृगपतिः
सुखेन त्वं दिक्षु प्रतनु परितः फेरव रवम् ॥३॥
रे वञ्चक त्वमयमद्य तु चण्डतुण्ड-
मुल्लास्य तादृशमथो गलगर्जनं च ।
नीतोऽसि दूरतममामिषपिण्डलोभै-
र्जिह्वां विकृष्य किमहो विनिवर्त्तितोऽथ ॥४॥

### वानरः

अपारः कूपारः परमृषिरभाषिष्ट तु मृषा
ममानुस्वार्यश्चेत्कथममुमलङ्घिष्ट हनुमान् ।
प्लवङ्गः सोऽप्यासीदहमपि च हीनः किमु ततः,
कपे सत्यं ब्रूषे, परमृषिरभाषिष्ट तु मृषा ॥१॥

अमुं वारंवारं ननु विधुनु हारं हृदयतः
करक्षेपैः सारोज्झितमपि वदाऽऽस्यादिनटनैः।
तथा भिन्द्धि छिन्द्धि त्वमिदमनुरूपं तव कपे-
ऽप्यपेतः पापात्त्वं स परमपराद्धस्त्वयि तु यः ॥२॥

# अथ पक्षिणः

## वैनतेयः

को वैनतेयव्यतिरिक्त आस्ते विश्वम्भरं यः खलु वोढुमीष्टे।
विश्वम्भरात्कोऽस्ति परश्च यस्य पत्रं पतत्रिप्रवरोऽपि नाम ॥१॥

देवेन्द्रावधिविक्रमक्रमवती यस्योन्नतिप्रक्रिया
क्ष्वेडोदग्रभुजङ्गभङ्गविषये तादृग्वदीक्षास्थितिः।
आम्नायस्वरसप्रवृत्तिविधये सौवर्णपक्षग्रहो
वैकुण्ठैकपरिग्रहः कथमसौ पक्षी गरुत्मानपि ॥२॥

## हंसः

हे हे मरालकुलनायक जृम्भमाण-
राजीवजीवनसमुल्लसितानि तानि।
हित्वा सरांसि ननु सम्प्रति यत्र तत्र
संमार्गसि क्व सलिलं सरवः किलामी ॥१॥

रे राजहंस बकवृत्तिमुपाश्रितोऽसि
त्वं तावदेवमनपत्रपचेतसा चेत्।
एतर्हि तर्हि बकवृत्तिनिवृत्तिरेषा
वार्तावशेषपदवीं भजतामशेषा ॥२॥

कलहं कलहंस कहलोका भवता यद्रचयन्ति दुर्विदग्धाः।
इह मौनपरिग्रहोऽनुरूपस्तव तावन्ननु मौक्तिकाशनस्य ॥३॥

राजहंसकुलावतंस, विहाय तादृशमानसम्।
पङ्कसंकरकेऽपि किन्तु विहर्तुमद्य समीहसे ॥४॥

नालीके नवगर्भे ननु कमलास्वाद माद्रदपासि ।
धिग्गुरुदयपानिनं परं हंसोऽसि सत्यमिदम् ॥५॥
कमलाकरे पुनरपि सन्मानमवाप्य शालिशुभिपक्षः ।
सविनोदीषु गतिष्वस्त्वमिव त्वं राजहंसोऽसि ॥६॥
एतेहि त्वरितं क्षुधित इव त्वं लक्ष्यसे हंस हे
शम्बूकानपि मत्स्यकानपि तथा कीटानपि स्वादय ।
जाता मेऽलितिमिङ्गिलिन्या परमहं हंसोऽस्मि मुक्ताशनो
मुक्ताभ्यन्तरलयो भवेन्नु भवेद्धंसस्तु मुक्ताशनः ॥७॥
श्रीमन् हंस जलेषु पङ्कपटलेष्वेवं वसन्श्चरन्-
स्त्वं हंसायसि पाऽनवरत पतितोऽप्यन्न स्वजातिव्रतम् ।
नीरक्षीरविवेचनेऽप्यनिपुणप्रायोऽसि मन्दादर-
स्तज्जातिव्रतरक्षणक्षणविधौ यत्नादरः कोऽपरः ॥८॥

## शुकः

कोलाहलं कलयसे बहुलं हि कीर
घुष्टं परं हृदयशून्यमभिप्रजल्पन् ।
किञ्चित्परामृश परामृश चापि साधो
वाचो यथा तव वचस्सु पदं न दध्यात् ॥१॥
राजलोककरलालितमूर्त्ते वाचमीदृशमवाप्य विचित्राम् ।
श्रीहरेर्गुणगणान्गणयेथाः कीर धीर मृगयस्यपरं किम् ॥२॥
जन्मकोटरमभिस्मरयन्भोः कीर किन्नमयसे ननु वक्त्रम् ।
प्राप्य राजकुलमेवमपि त्वं राम राम, भज राममिदानीम् ॥३॥
बालिशः खलु शुकः पुनः पुनः कर्णरस्यमनिशं वदन्नपि ।
प्राप्य जातु निजजन्मकोटरं नोपयाति ननु शीलमस्य तत् ॥४॥
कीर किञ्चन तथा कृथा भवे प्राचि येन भजसे दशामिमाम् ।
नन्वथापि नहि रज्यसे सखे रामनामनि, परं किमीहसे ॥५॥

आस नाम भगवाञ्शुकोऽध्वरे नित्यमग्नहृदयो, विमोचितः ।
आस्त येन स परीक्षिदध्वराद् ग्लायसे*तु शुक बन्धबन्धुरः ॥६॥
सन्ति नाम शतशः सहस्रशः पक्षिणस्त्विह परं तुलामिमाम् ।
कीर कोऽयमधिरोढुमर्हति श्रीशकीर्त्तनधुरन्धरस्य ते ॥७॥

अहो कायः कश्चिन्मरकतमणिच्छायनिपुण-
स्तथा ग्रीवा जाग्रत्सुरपतिधनुःकौतुककरी ।
मुखं माणिक्याभं किमपि च वचः संभृतरसं
गुणा एव श्रीमँस्तव तु शुक, बन्धाय फलिताः ॥८॥

शाकुन्तान्कुन्तान्तप्रतिभटदृशा प्रेक्ष्य किमपि
प्रयुञ्जानाः पाशानिह हि विहरन्ते मृगयवः ।
सुसंवृत्तं तावत्तव रुचिरवाचां विरचनं
कृतान्तस्य श्रोत्रे विकिरसि गिरं कीर किमहो ॥९॥

## कोकिलः

पुँस्कोकिलो यदपि काककुले कथञ्चि-
द्वासं स्वपक्षविरहादुररीचकार ।
नो तावता मलिनमार्गमनोनिवेशं
नो वा श्रुतिव्यथविधायिवचः प्रवृत्तिम् ॥१॥

कर्णारुन्तुदवाक्प्रपञ्चचतुरे पाण्डित्यमुन्नाटय-
त्यस्मिन्काककुले च गृध्रनिवहे दूराभिवीक्ष्यते ।
श्रीमन् कोकिल काकलीकलकलप्राग्भारपारङ्गम-
व्यापारैरिह भारतीश्रवणयोरासेचनैर्वः कृतम् ॥२॥

महिमानं रसालस्य यं वेद खलु कोकिलः ।
मर्कटः करटो वापि तं श्रयन्नपि वेद तम् ॥३॥

---

* कर्मव्यतीहारे तङ् ।

## चातकः

विश्वस्मिन्कति वा न सन्ति परितो हंसावतंसावली-
वेल्लत्पद्मपरागवासितपयःपूराः पयोराशयः ।
शुष्यत्तालु तृडुद्गमप्रतिगलत्प्राणो यदेषु स्थिते-
ष्वारसे चातक पातकस्य तव तत्कोऽप्येष कोपक्रमः ॥१॥
श्रीमँश्चातक सन्तु विश्ववलये ते ते शकुन्तोत्तमाः
कस्त्वाप्नोति तव व्रतस्थितिमिमां कीरश्चकोरोऽथवा ।
स्यात्प्राणप्रणयक्रमो जगति वा प्राणप्रयाणन्नु वा
याच्ञा या खलु सा तु विश्ववलयेशानान्महेन्द्रात्परम् ॥२॥

## चकोरः

श्रीमँश्चकोर भवदीयविलोचनस्य
को नीतिरीतिमवबोद्धुमपि क्षमः स्यात् ।
येनानुरज्यसि सुधाकरसंप्रयोगे
तद्वद्विरज्यसि हलाहलगोचरे च ॥१॥
अमृतविसरव्याप्तास्तेऽमी सुधाकररश्मयो
भवति हि निजः सर्वस्तेषामृतं महिमाऽस्त्ययम् ।
तदपि तु वरं वह्निं चुम्बेच्चकोरकिशोरकः
परमिह परं नो जानीते सुधाकरतः परम् ॥२॥

## चक्रवाकः

चक्रवाक किमियद्विषद्यते धेहि धैर्यमवधेहि वस्तुनि ।
आत्मनैव सुकृतं च दुष्कृतं चात्मनैव ननु भुज्यते जनैः ॥१॥
धेहि धैर्यमवधेहि यद्ब्रुवे चक्रवाक किमियद्विषद्यते ।
अभ्युदेति ननु मित्रमण्डलं चैति चैति च तमिस्रविस्रसा ॥२॥

## मयूरः

श्रीनीलकण्ठ परिदृश्यविचित्रपक्ष
ब्रूमः किमत्र भवता प्रतिमृष्टमेव ।

यत्तद्भुजङ्ग परमो ननु नीलकण्ठ-
स्तद्दुर्यशो भुजगनिर्दलनव्रतेन ॥१॥

## बकः

खाद खाद निभृतं निभृतं भोः कह्व मत्स्यनिवहं, विहरस्व ।
पल्वलेऽत्र च चिरं रुचिरं त्वं हंसतान्तु परमामभिनीय ॥१॥

बिभ्रे शुभ्रतमां तनूं सुललितं चाऽभ्रे भ्रमामि स्फुट-
त्कह्लारे कलयामि केलिमनिशं कासारपूरे तथा ।
कस्मादस्मदयं भवेदिह महान् हंसस्तदित्थं बक
ब्रूहि ब्रूहि निरर्गलं किमितरत्कालः कलिः क्रीडति ॥२॥

स्वच्छन्दं सरसीषु सञ्चरतरां स्वच्छश्च बोभूहि भो
मुक्ताशुक्तिषु च प्रपञ्चयतरां चञ्चू समुञ्चञ्चनाम् ।
एकं मा कुरु मा कुरु प्रिय सख प्रह्वन्तु कह्व ब्रुवे
नीरक्षीरविवेचनैकचतुरैर्हंसैस्तु यत्स्पर्द्धसे ॥३॥

## काकः

काकोल कोकिलकलां कलयाऽनुकालं
माकन्दकुञ्जकुहरे विहर प्रकामम् ।
काये च कञ्चन किलाऽऽवह कालिमानं
स्यात्काकलीकलकृतौ कतमोऽभ्युपायः* ॥१॥

कोलाहलाकुलककुप्कुलताऽत्र काकाः
काकाकलीकलकलैककलाकुलेषु ।
पुँस्कोकिलेषु कलिता किल कल्यते भोः
किं कालिमाकलितकान्तितयैव गर्वः ॥२॥

---

* पाठान्तरम्—'कतमस्तु यत्नः' ।

क्रेङ्कारकारिलपनः परिकालिमाढ्य-
श्चण्डालभाण्डजलक्लृप्तमहाभिषेकः।
हंहो अमेध्यमुखलेपनकर्मणोऽयं
काकः कुतोऽस्ति विधिना चिरजीविताभाक् ॥३॥
अम्भोधयः प्रविलसन्तु यदीय तोयै-
रम्भोधराः क्षितिमुपप्लुति मानयन्ति।
किं तावतोऽस्मृतु जनङ्गमभाण्डशुष्य-
त्पानीयपानपरतां तु वराककाकः ॥४॥
तीर्थध्वाङ्क्ष तवैतैरटितैर्भूयोभिरस्ति किं नाम।
प्रेतबलेर्दधिभक्तस्यास्ते पात्रं भवान्, कुतो हंसः ॥५॥

## उलूकः

हंहो उलूक भुवनप्रतिभासनैक-
चन्धौ तदाऽन्ध इव भास्वति कुत्र वाऽऽसीः।
व्याजृम्भिते तमसि तामसलोकचारो-
ल्लासेऽधुना त्वमसि यत्खलु वावदूकः ॥१॥
रे घूक मूक इव संप्रति कोटरान्त-
र्लीनः कथं क्षपयसे तु दिनानि दीनः।
सा तादृगद्य तु गता क्व नु शूरता ते
काकेषु यामचकलस्तुमुलां तदानीम् ॥२॥
गतोऽस्तमिह भास्करः करविधारिभूभृद्गणो
न सम्प्रति कलानिधिः श्रयति काञ्चनाऽपि श्रियम्।
उलूक कलयस्यऽहो किमधुनाऽपि नो चङ्क्रमं
निशाऽद्य च चतुर्दशी निशिचरैश्च चञ्चूर्यते ॥३॥

## गृध्रः

साधु गृध्र ननु साधु वीक्षसे दूरतोऽपि खलु मांसमुत्कटम्।
ईदृशी जगति दूरदर्शिता केतरत्र भवतस्तु दृश्यते ॥१॥

रे रे गृध्र सुसत्यं तव तावद्दूरदर्शिता प्रथते ।
यस्त्वं म्रियमाणादपि दूराद्‌प्यामिषं लिप्सुः ॥२॥

### कुक्कुटः

कुक्कुट भवतोऽनटितग्रीवं रटितं न तावदधुनाऽपि ।
कथमभ्युदेति भास्वान् राजीवेषु श्रियं प्रदिशन् ॥१॥

### टिट्टिभः

टिट्टिभ भवतोत्तानौ न कृतौ पादौ यदि स्याताम् ।
तद्गर्जद्गगनं ननु जगदेव तु चूर्णयेत्पतितम् ॥१॥

## अथ कीटाः

### भृङ्गः

हन्त भ्रम भ्रमर, विभ्रमतो मरन्द-
सन्दोहसुन्दरमपासितवान्यदाऽऽसीः ।
तत्तादृगम्बुजवनं ननु हृद्विशून्य-
वंशाटवीयमिह कोऽस्ति रसप्रसङ्गः ॥१॥
को वा प्रशंसति न नाम जनो जगत्यां
माध्वीकमम्बुजवनी नवनीतमेतत् ।
माधुर्यधुर्यगुणमार्मिक एक एव
किन्त्वस्य विश्ववलये ननु चञ्चरीकः ॥२॥
दानान्धितेन मनसा ननु चञ्चरीक
मातङ्गमभ्युपगतोऽसि किमेतदास्ते ।
यद्वाऽनुरूपमिदमेव मधुव्रतस्य
श्रीमन् द्विरेफ विदितस्य भवादृशस्य ॥३॥
रे रे मधुव्रत कियानिव दुर्ग्रहस्ते
यत्केतकीमधुविलुब्धमना मनाङ्नो ।

दुष्कण्टकोत्कटगतिं प्रतिवीक्षसे तद्-
भुङ्क्ष्व क्षतव्यतिकरं किमिहाधिकोक्त्या ॥४॥
रे चञ्चरीक बहुधा परिविप्रलब्ध-
स्त्वं नाम किंशुकवनीषु च शाल्मलीषु।
तद्दूरतश्चरसि नन्वयमस्त्यशोक-
श्चञ्चन्मरन्दसुमनस्तबकावनद्धः ॥५॥
मधुरसं रसयन्ति न के जनाः कथमयं समगृह्यत किं विदुः।
विविधपुष्पकुलान्मधुसंग्रहे मधुकरः परमस्ति विचक्षणः ॥६॥
पारिजातसुमनःसमुल्लसत्सौरभप्रसृमरप्रवेणिका ।
न व्यगाहि ननु नव्यभृङ्ग भो,स्तौषि तेन मुखरं परांस्तरून् ॥७॥
भ्रमसि तत इतस्त्वं मालतीतो वियुक्तो
व्रततिषु रसिकानामग्रणीः सन्नऽपि त्वम्।
धिगिव रसिकतान्ते मालतीमन्तरा या,
मधुकर ननु दृष्टा नैव वा मालती ते ॥८॥
या मूर्ध्ना सदऽकारि* दानपरमेणैरावणेन स्वयं
यश्चात्मावधिदानदीक्षणवता कल्पद्रुमेणापि वा।
सोऽयं दैवदशावशात्कथमपि प्राप्तो भ्रमन्मारवे-
कान्तारेऽद्य करीरतो मधुकरो माध्वीकलिप्सोन्मुखः ॥९॥

## खद्योतः

भास्वत्यस्तमुपागते विसृमरध्वान्तैकविध्वंसने
चन्द्रे चापि कलाकलापकलिते नो नेत्रपात्रेऽधुना।
ध्वान्तव्यूह भवाननर्गलमलं व्याजृम्भतां व्योमनि
प्राण्यन्धङ्करणे प्रभाविह भवान् खद्योत च द्योतताम् ॥१॥

---

* पाठान्तरम्—यस्तावत्सदऽकारि।

भासां निधिर्न खलु यत्र न वा कलानां
नाथो न च क्वचन संप्रति तारकाश्च ।
तत्राद्य दुर्दिनदिने नभसो निशीथे
त्वं ज्योतिरिङ्गन परङ्गनावभासी ॥२॥

## मशकः

रे रे भृशं मशक कल्पय कर्णमूले
कञ्चिद्रवं शिशुजनस्य मनोऽनुकूलम् ।
भृङ्गाः पयोजपरिषत्परिनिष्ठिता नो
तिष्ठासवस्तव पदे ननु मास्म भैषीः ॥१॥
नास्त्यन्यज्जगदस्मादस्मद्दृष्टादितीह मनुषे यत् ।
साधूदुम्बरजन्तो जगदन्तोऽसौ त्वया लब्धः ॥२॥

## सर्पः

द्विजिह्वता कस्य न ते प्रसिद्धा वक्रागतिर्विश्वविलक्षणा च ।
आशीस्तथा लोकविमोहिनी सा भुजङ्ग कस्ते न बिभेत्य वर्हीं ॥१॥
आशीःप्रयोगादपि चागतानां प्राणापहारप्रवणं भवन्तम् ।
भुजङ्ग दूरात्प्रणमामि तावत् त्वमेव भूया निधिभाजनं भोः ॥२॥
श्रमं विदधतः परे यदिह विश्रमाभ्यर्थिनो
भवन्तु ननु ते तथा तव तु किन्तु तत्साम्प्रतम् ।
कुलाचलवलक्षनोत्तरसमुद्रमुद्रोल्लस-
द्धरावलयवावहे परमहे ! क ते विश्रमः ॥३॥
द्वीपैः पल्लवितां वनैश्च विततां भूभृद्भिरुत्तंसितां
वारांराशिभिरास्तृतां जनपदाऽऽभोगादिभिश्चाऽऽचिताम् ।
शेष क्ष्मां सततं दिवा च निशि चाद्य श्वः परश्वोभुजे
भर्त्र्यांभरविश्रमार्थनकथा कन्था त्वयोत्सृज्यताम् ॥४॥

कृष्णमहाभोगीन्द्रो विहरति देशेऽत्र किं नाम ।
कालिय भुजङ्ग तदिहाऽऽवध्नासि पदं मुधैवाहो ॥४॥

### मूषकः

शुण्ठिहरिद्राशकलं मोषं मोषं तु मूषक भोः ।
औषध वणिग्भव परं मा मार्जारेषु दर्शय तत् ॥२॥
निष्करुणो निष्कारणमहहच्छिद्री करोषि शुभवसनम् ।
परगुह्यगुप्तिगुणमयमाखो विघ्नेश्वरस्य धुर्योसि ॥३॥

## अथ जलचराः

### तिमिङ्गिलगिलः

यस्मिँस्तिमिङ्गिल कृते खलु दत्तकम्पे-
ऽकूपार एव परिकम्पमुरीकरोति ।
इन्दूदयोद्दलितपूर इवात्र तस्य
कूपे तिमिङ्गिलगिलस्य कथं निवेशः ॥१॥

### राघवः

उन्मज्जति क्षणमलक्ष्यत यत्र देवैः
श्रीराघवोपरचिताम्बुधिसेतुलक्ष्मीः ।
तस्या परत्र ननु कुत्र तु राघवस्या-
ऽकूपारतो भवतु वारिणि सन्निवेशः ॥१॥
स्थितवति त्वयि राघव राघवः
किमकरोन्नलसेतुनिबन्धनम् ।
न भवतोऽम्बुधिरर्हति लङ्घनां
किमपि वा कपिबालकचेष्टितम् ॥२॥

## शफरः

भो भोः फर्फरितं किमेव कुरुषे भूयश्च भूयः पुरँ-
श्चापल्याच्छफर ब्रवीषि ननु भो जानासि कोऽसाविति।
यन्त्वं शुभ्रपरिच्छदं तु मनुषे हंसस्तटस्थोऽस्त्ययं
सोऽसौ हंसजनत्वनाटकनटः कह्वः क्षणं प्रह्वति ॥१॥
रे रे रे शफर भ्रमस्यऽविरतं पादोपकण्ठे लुठन्
निध्यानेऽर्द्धनिमीलिताक्षनिभृतावस्थायिनोऽस्थायिनः ।
हंसोऽयं परमः समागत इति त्वं मन्यसे किन्तु भो
मुक्ताभ्यर्हितमानसैकपरमो हंसो जलेष्वेष्वपि ॥२॥

## मकरः

रे रे नक्र कमक्रमं वितनुषे वावास्सि मुत्स्यान्मुधा
स्वीयोपान्तजुषः प्रपश्य पुरतः कासारमासारयन् ।
आपातान्मदराजिमाजिपरमो विक्षोभयत्युद्धरँ-
स्तत्ताद्दकमलाकरं करिपतिस्तत्रोचितोऽयं क्रमः ॥१॥

## कूर्मः

सङ्कुचन् किमपि कूर्म सन्निधावागतेषु वदनं वृणोषि किम्*।
दूर एव सुतरां स्थिता वयं मा स्म मास्म ननु संकुचो मुधा ॥१॥

## मण्डूकः

याताः क्वाऽपि तु राजहंसनिवहा नामापि न श्रूयते
तेषामद्य यथा, जलैस्तु जगती जङ्गम्यमानैर्भृता ।
कह्वे सम्प्रति राजहंसपदवीं चञ्चूर्यमाणेऽखिल-
श्रेयोवर्त्मनि पङ्कसंकरमये मण्डूक मूकोऽसि किम् ॥१॥

---

* पाठान्तरम्—यत् ।

# अथ पर्वताः

## सामान्य पर्वतः

प्रोत्तुङ्गतागुणतिरोहितमानिमानो
नानागमोद्गमपदं धृतवाहिनीकः।
सत्त्वैकधाम शरणं खलु धार्मिकाणां
धीरं धुरंधर दधासितरां धरां त्वम् ॥१॥
श्रीमन्सुमेरुगिरिराज जनेषु दीने-
ष्वेतेषु सत्स्वपि दवीयसि वर्तसे यत्।
देवेषु दर्शयसि यच्च विभूतिजातं
धन्या विभूतिरियमस्ति वदान्यता च ॥२॥
लोके सन्ति परश्शता गिरिवरा नानागमोल्लासिन,-
स्तेऽश्मप्रायतया भवन्ति विदिता मेरौ तु दृग्गोचरे,।
योऽसावत्र बुधेन्द्रवृन्दसमुपस्थानार्हनित्योन्नति-
भूभृत्संभृतपादभास्करपरिक्रान्तः समन्ताच्च यः ॥३॥
लोके सन्ति महीभृतः प्रतिदिशं स्फारस्फुरद्वाहिनी-
भाजो भास्वदभिप्रकाशितलसच्छृङ्गाः कियन्तो न वा।
पादोपान्तपरिक्रमक्रमवशप्राप्तोदयो यस्य वा
भास्वान् सन्त्विह मेरुरेव विबुधक्रीडैककेलीगृहाः ॥४॥

## हिमवान्

कामं प्रजल्पतु जनोऽयमसौ हिमानी
तन्नीरसः कथमसौ सरसो गिरिः स्यात्।
एतन्मुखाद्विसृमरां तु सुरस्रवन्ती-
मास्वाद्य माद्यति रसोल्लसितः सरस्वान् ॥१॥

### विन्ध्यः

सन्त्येव सर्वगिरयः समुदग्रशृङ्गाः
सौमेरवप्रतिभटो ननु दुर्घटोऽन्यः ।
श्रीविन्ध्यभूभृदधिपादधिकोऽपि कोऽपि
स्यान्नैव वा गुरुजनाश्रवता गरीयान् ॥१॥

### लोकालोकः

भूयांसः खलु सन्ति भूमिवलये भूमीभृतः सर्वतो
नानारत्नसमुज्ज्वलाश्च परितः प्रोत्तुङ्गशृङ्गाकुलाः ।
लोकालोक इहैक एव तु परं विश्वप्रकाशत्तम-
श्च्यात्माद्भुतधाम धाम जगतीपृष्ठप्रतिष्ठाकरः ॥१॥

### रोहणः

त्वल्लब्धोर्जितरत्नकोटिविलसत्कोटीरकान्त्युज्ज्वला-
विश्वस्मिन्प्रथयन्ति तावकतथौदार्यं बुधाधीश्वराः ।
तत्पाषाणमयस्तु* पञ्चषमणिप्रोत्तुङ्गशृङ्गाकुलः
श्रीमन् रोहण भूभृदत्र कतमः सार्द्धं त्वया स्पर्द्धताम् ॥१॥

### मलयः

कतिकतीह न सन्ति धराधरा विविधसाललतागहनावृताः ।
क इव तेषु हि चन्दनचञ्चितस्तदपि भूवलये मलयेतरः ॥१॥

### महेन्द्रः

श्रीमन्महेन्द्र कति नो जगतीतलेऽस्मि-
न्भूमीभृतः प्रतिदिशं प्रतिभान्ति नाम ।
त्रिःसप्तवारजगतीजयजागरूक-
रामाश्रयः परमहो जगति त्वमेकः ॥१॥

---

* पाठान्तरम्—'पाषाणमयो हि' ।

## मन्दरः

रे मन्दराचल चलाचलचित्तवृत्ते वृत्तो भुजङ्गमवशादुदधेर्विमन्थे ।
अद्य त्वया ननु चतुर्दशरत्नमध्ये मैनाकमित्र कतमत्समुपार्जितं भोः ॥१॥
मन्द मन्दरगिरे भुजङ्गमाकर्षणेन किममन्थ्यऽमन्थरम् ।
पाथसांनिधिरहिद्विपद्वलाद्द्राविताद्रिजनपक्षरक्षकः ॥२॥

## मैनाकः

मैनाक नाकपतितो निजबन्धुपक्षव्याकर्त्तनं यदपि ते पतितं तथापि ।
पातालगाङ्गगदुपप्लवदाँस्तु दैत्याँस्तत्राखि तत्तव विवेकप्रवेकभावः॥१

## गिरिदरी

दरी गरीयसी याऽसौ करिकुम्भविजृम्भिणः ।
साऽन्तर्भुजङ्गं बिभृते कापि तस्मिन्वनं गते ॥१॥

## निर्झरः

जीयादेष चिराय निर्झरवरः पाथोधिवेलोच्छल-
त्कल्लोलोद्भट तृट्परीत पथिकाः संजीविता जीवनैः ।
येनैवा,थ यथा सुधारसधयैः क्रीडानुबन्धोद्धुरैः
स्वर्णाद्यामपि सौख्यनिर्भरभृतैर्विस्मर्यते तैर्न सः ॥१॥

# अथ वृक्षाः

## कल्पवृक्षः

कल्पपादप वदान्यताविधिं वर्णयाम भवतो वयं कियत् ।
यः फलं गुणिनि निर्गुणे समं पादपोचितमयं प्रयच्छसि ॥१॥
यस्यार्थित्वजुषो महेन्द्रजलराड्वित्ताधिनाथादयो
यस्यात्मावधिदानदीक्षणयशोभारैर्दिशो भूषिताः ।
सोयं कल्पमहीरुहो ननु तरुस्तद्वत्करीरोऽपि चेत्
किं ब्रूमो विधये व्यधादिह समं यो वा तरुत्वं तयोः ॥२॥

बम्भ्रम्यमाणः प्रतिसालमूलं यान्याञ्श्रमान्विन्दति चञ्चरीकः ।
ते सर्वं स्वैकपदे मुदे स्युः कल्पद्रुमे लोचनगोचरेऽस्य ॥३॥

## चन्दनवृक्षः

सारः स, सौरभभरः स च, तापहारी
भूभृच्छिरस्यसि निविष्टपदोऽतिहारी ।
श्रीचंदनद्रुम भुजङ्गमसङ्गशालिन्
दूरादयं भवतु नो भवतः प्रणामः ॥१॥

परस्सहस्राःखलु सन्तु भूरुहाः फलप्रसूनादिविभूतिभूपिताः ।
तथापि नैवास्ति तरुःस, सौरभेतिशायकः स्याद्धरिचन्दनस्य यः॥२॥

उपास्यते यैः हरिचन्दनद्रुः सुवासनाभिर्विदधात्यसौ तान् ।
सुसौरभोद्गारिन्नून ! नूनं स (एव) तस्यान्यतरोर्विशेषः ॥३॥

जगति सौरभशीतलतागुणैः शमयिता जनतापभरस्य यः ।
तमिह चन्दनभूमिरुहं परं मलयभिल्लपुरन्ध्रि दहस्यहो ॥४॥

श्रीमँश्चन्दन विश्वविश्रुतमिदं दाक्षिण्यमास्ते तथा
शैतल्यं हृदयंगमं, कथमहो सौरभ्यमभ्युच्यताम् ।
चित्ताऽऽसेचनकं, यतस्त्वदुपगोऽप्यामोदतेऽन्योद्रुमः
किं ब्रूमो विधये व्यधात्तव तथासङ्गं भुजङ्गेपु यः ॥५॥

एकस्मिन्सति सर्वसौरभकरे श्रीगन्धसारेऽभव-
न्प्रान्तस्थास्तरवः शिलीमुखयुता ये गन्धसारायिताः ।
तत्रैवाद्य विधेर्विधानवशतः तेष्वेव तस्मिन्पुन-
स्त्वेकस्मिन्नसति क नाम तु गता सा गन्धसारात्मता ॥६॥

जनिरिह जगद्धन्याऽनन्यादृशी कुलभूभृत-
स्त्रिभुवनपरीतापव्यापन्निराकरणं वपुः ।
द्वितयरसनाक्ष्वेडस्फूर्जद्भुजङ्गमसङ्गति-
र्मलयजगुणग्रामश्चेतो धिनोति धुनोति च ॥७॥

अभूदत्रारामे परिविसृमरामोदमयता
विवेकेऽनेकेषामहमहमिकातः कलकलः ।
तरूणामेकस्मिन्प्रकृतिसुरभौ चन्दनतरा-
वथेदानीं तस्मिन्नरति स पुनः स्वपिति हहा ॥८॥

## आम्रवृक्षः

असौ रसाल बहु कि,कुसुमाकरस्य
प्राणा भवस्यऽय,मथापि तु काकलोकैः ।
पुँस्कोकिलस्य ननु काकलिकां विना ते
पर्याप्यते किमह. सौरभसौरभश्रीः ॥१॥
अस्मिन् रसालसरसालविशालसाले
दावानलानिलनिदाघमुखाः कियन्तः ।
सन्नाहमत्र रचयन्ति परार्थसार्थ-
व्यग्रात्मनि प्रतिविहाय पलाशराशिम् ॥२॥
माकन्द किं न गहनं ननु को द्रुमो वा
नालोकि लोकवलये किल कोकिलेन ।
यत्त्वस्य विश्वपरिचंक्रमखेदहानं
त्वय्येव तत्तु परमाऽऽयतते प्रतीमः ॥३॥
माकन्द कन्दलितसौरभमाधुरीश्री-
भव्योल्लसद्रसफलैकधुरन्धरस्त्वम् ।
आस्से यथा तरुकुलैः स्पृहणीयवृत्त-
स्तद्वद्यशांसि परितस्तनुते पिकस्ते ॥४॥
प्राप्ते वसन्तसमये सन्ति कियन्तो न पुष्पितास्तरवः ।
किन्त्वेकः सहकारो भाति वसन्तस्य सामन्तः ॥५॥
उद्यानैकविभूषणस्य ऋतुराट्प्राणप्रदस्योद्भवा-
द्यावज्जीवमशेषजीवनिवहस्यार्थेऽर्पितात्मावधेः ।

हा हा श्रीसहकारभूरुहपतेर्विश्वाभिनन्द्यस्थितेः
कालाङ्गारकरः करोति कदनं क्रूरैः कुठारोद्यमैः ॥६॥
पुष्पैर्भृङ्गकुलं फलैः शुकगणं शाखाग्रजैर्वानरान्
सर्वैः पल्लवकाष्ठमूलनिवहैस्तैश्चाप्यशेषाङ्गनान् ।
कुर्वाणेन वदान्यमान्य भवता माकन्द संमानिता-
न्विश्वेषामुपकारकारणधृतरवात्सँश्चिरं जीव्यताम् ॥७॥
काण्डैः केचन भूरुहास्तदितरे शाखाभिरेके परं
छायाभिः खलु केपि पल्लवभरैः पुष्पैः फलैश्चापरे ।
केषामप्युपकुर्वते परमयं श्रीमान् रसालद्रुम-
स्तैः सर्वैरपि विश्वमप्युपकरोत्यऽन्योऽत्र धन्योदयः ॥८॥
द्विजानामाधारः सुरसफलसिद्धेः कुलगृहं
गभीरच्छायायाः स्थितिरसि समृद्धिः सुमनसाम् ।
सदारामप्राणस्त्वमिव सहकारद्रुम सखे
त्वमेवाध्वन्यानां शरणमसि किं जल्पितभरैः ॥९॥

## अशोक वृक्षः

सशोकान्निश्शोकाञ्जनयति जनानित्यश्रृणवं
ततः श्रेयोलोकव्यतिकरिजनेष्वप्यधिगतम् ।
इदानीमद्राक्षं प्रियविरहिलोकेषु यदिदं
तदस्याऽशोकत्वं परममधुना नः परिगतम् ॥१॥

## कदली वृक्षः

कदलि किमिव पापं पूर्वजन्मार्जितं ते
यदिह फलदशायामीदृशस्ते विपाकः ।
न भवति भवतीहाऽऽरामलक्ष्मीस्तदानी-
ममह विजयजामद्वैजयन्तीव भान्ती ॥१॥

### बकुलवृक्षः

न विज्ञाता तेऽत्राऽऽपतति शरदां वापि शतकै-
र्देवाग्नेः संचारः परमिह परोऽनुच्चणपदम् ।
त्वमत्रोद्यानार्हो बकुल सुमनस्सौरभभरं
पलाशानां वर्गे विकिरसि भृशं ते व्यसनिता ॥१॥

यदपि न वनपाल एष रक्षामनुरूपां भवतश्चचार चारो ।
सुरभयसि वनं तथापि य,त्तद्बकुल, कुलव्रतमेव पालनीयम् ॥२॥

### विभीतकवृक्षः

रे रे कलिप्रिय विभीतक रे त्वमुच्चै-
र्भावेन भावयसि काममभिमानमुद्राम् ।
नैवोपसर्पति भवन्तमिहाध्वनीनो
ग्रीष्मोत्तपत्तपनतापहतोऽपि कामम् ॥१॥

### भूर्जवृक्षः

न खलु भूर्जतरोर्व्यतरच्छ्रियं विधिरिहाऽकरुणः फलपुष्पयोः ।
तदपि तूपकरोति शरीरतः क्षतिमपि प्रविषह्य जनस्य सः ॥१॥

### निम्बवृक्षः

मधुभिश्च पयोभिश्च सर्पिर्भिश्चेदृशीकृतः ।
साधु माधुर्यमेतत्ते निम्ब किं वर्णयामहे ॥१॥
मधुभिश्च पयोभिश्च सर्पिर्भिश्चासितर्पितः ।
रसालसालतां कच्चित्पिचुमन्दानुविन्दसि ॥२॥

### नारिकेलवृक्षः

किं पान्थ बाह्यकठिनं परमीक्षमाण-
स्त्वं नारिकेलमसि मुग्ध निराशचेताः ।
आप्यायितः शुभफलेन भवेस्तथात्व-
मेनेन, येन न परं सरसं मतीयाः ॥१॥

## शिरीषवृक्षः

विकर्त्तनकरोत्करैर्दवलितकल्पभव्यागमे
द्विजेषु परिदुर्गतेष्वपि च तीर्थजाते गते ।
इहाऽद्य मृदुलोज्ज्वलोल्लसितसौमनस्योदय-
स्त्वमेव समये शुचौ ननु शिरीष संदृश्यसे ॥१॥

## चम्पकवृक्षः

श्रीमँश्चम्पक रोचयन्ति मधुपा नो चेत्तमोमूर्त्तयो
यौष्माकीं खलु काञ्चनश्रियमिमां, का हानिरेतावता ।
तत्तादृक् सुमनःस्रजं हृदयगां देवस्य दैत्यद्रुहो
भावत्कीं विनिभाल्य सौषममदं देव्युज्झति श्रीरपि ॥१॥
यत् सीमद्रुमतां गतोऽसि न च यत् कौटिल्यलेशं श्रित-
स्तत्तादृक्सुमनस्सु काञ्चनरुचिं धत्से सदा मोदभाक् ।
तत् कर्षन्ति समन्ततो यदि जनास्त्वां निर्विशङ्कं ततः
श्रीमँश्चम्पक कम्परं प्रति पुनः खेदोऽयमावेद्यते ॥२॥
ये तावत् फलमात्रलोलुपतया रागं मुखे बिभ्रतो
जल्पन्ति क्षणमेव मिष्टवचनं, तेभ्यो यथास्यास्तथा ।
एते सौमनसोदयैः सुरभितस्वान्तस्य ते चम्पका-
ऽऽमोदेनैव वयं तु मोदितहृदा त्वद्भव्यमाशास्महे ॥३॥

## पुन्नागवृक्षः

माद्यत्सदालिसुमनस्तरुशालिताहगुद्यानदेशमपहाय मरौ प्ररूढः ।
पुन्नागभूरुहधुरन्धर एष दैवादापद्यते तपनतीव्रकरोपदग्धः ॥१॥

## पनसवृक्षः

दिश दिश दिश साधो ग्रीष्मकालेऽतिभीष्मे
किमपि जलममुष्मै बालकायाद्य तावत् ।

पनसशिशुरयं चेच्छिद्यते दारयते तत्
सुमधुरफलकोषान्मूलतः स्फारसारान् ॥१॥

न्यग्रोधवृक्षः

व्याकीर्य व्यतिलम्बिनीः खलु जटास्तत्तादृशाडम्बरं
पत्रादेर्विदधत् प्रतिष्ठितपदो दीर्घप्रदेशान्तरे।
सर्वं त्वं वटवृक्ष साधु तनुषे, किं ब्रूमहे, किंत्वयं
नन्वाऽऽरम्भि सदागमस्य तु कुतो न्यग्रोध रोधः पुनः ॥१॥

अश्वत्थवृक्षः

सर्वं चलाचलमिदं जगदेव न श्वः
स्थाता यदद्य परितः परिदृश्यते भोः।
यत्तद् व्यनक्ष्यभिनयन् स्वयमेतदेव-
मश्वत्थ कस्तु विटपेषु विबुध्यते तत् ॥१॥

तमालवृक्षः

फलार्थिजनमानसे तव निवेशलाभो भवे-
न्न वा परमभिज्ज्वलत्तपनतप्तविश्रान्तये।
पयोभरनमत्पयोधरसहोदरं त्वां ब्रुवे
तमाल तव कालिमा किमपि मे मनः कर्षति ॥१॥

सेवन्तीलता

सौन्दर्यसौरभसुरूपसमृद्धयस्ते
सेवन्ति सन्ति हि तथा, न यथेतरस्य।
कि ब्रूमहे तु विधये ननु दुर्बुधाय
यस्ते लताः कटुककण्टकिता व्यतानीत् ॥१॥

द्राक्षालता

द्राक्षां रसैकवसतिं यदि नाम काकः
पाकान्मुखस्य विजहाति विभीतचेताः।

तत्तावदस्तु न तु वस्तुनि कापि हानि-
र्माधुर्यधुर्यहृदयैव तथापि साऽऽस्ते ॥१॥

## वञ्जुलवृक्षः

साधु वञ्जुल निरर्गलोच्छलत्संचलज्जलपरिप्लवापदि ।
नम्रतैव विहिता हितावहा को जडेषु गुणिताग्रहो महान् ॥१॥

## अर्कवृक्षः

म्लायेयुर्लवलीलवङ्गलतिकामाकन्दकुन्दादयो
भीष्मार्केऽतिखरैः करैर्वितपति ग्रीष्मेऽत्र भद्रद्रुमाः ।
अर्क त्वं तु सुखं समुल्लस सखे पत्रादिकाडम्बरै-
र्धन्यस्ते शुकसंनिभः फलभरः, कस्येतरस्येदृशः ॥१॥
यस्मिन्नभ्युदिते समस्तजगतामात्मप्रतिष्ठोदयो
पादानुग्रहतश्च यस्य विलसन् राजेन्दुरुद्द्योतते ।
अर्कश्चेत् किमिवार्कताव्यसनितां धत्से कुवृक्ष त्वकं
चेदीशस्य परिग्रहात् किमियता त्वं त्वं स एवाथ सः ॥२॥

## धत्तूरवृक्षः

धत्तूर दूरतरतः कनकेति कीर्त्ति-
माकर्ण्य कर्णसरसां समुपागमं यत् ।
रत्नात्मकं फलभरं भवतोऽभिकाङ्क्ष-
न्प्राप्नोमि युक्तमिह मातुलपुत्रकन्ते ॥१॥
श्रावं श्रावं काञ्चनक्ष्मारुहेति श्रीमन्नामोदात्तमभ्यागताः स्मः ।
उन्मत्त त्वां प्राप्तुमश्चानुरूपं मृत्योर्दूतैः सत्फलैः संभृतं तत् ॥२॥
ईशस्यासि परिग्रहास्पदमहो उन्मत्त तत्त्वं दध-
ल्लोके काञ्चन काञ्चनेति पदवीं तस्मै भवेः काञ्चनम् ।

हंहो मातुलपुत्रकं प्रकटयस्यस्मासु* सेवाफलं
विष्वक्कण्टकितं तु येन विवशा मृत्योः प्रयामो मुखम् ॥३॥

## पलाशवृक्षः

रे चञ्चरीकशिशवः शुकशावकाश्च
रूपानुरूपमधुसत्फललालसाढ्याः ।
किं पुष्पितं समुपधावत किंशुकद्रुं
नूनं न वः श्रुतिगतं यदयं पलाशः† ॥१॥

## कार्पासवृक्षः

विश्वैकविश्रुतगुणात्मतया जनानां
शीतातपादिपरिरक्षणदक्षिणस्य ।
गुह्यैकगोपनपरस्य विशुद्धमूर्ते
कार्पास कस्तव तुलामधिरोढुमीष्टे ॥१॥

## मालतीलता

तदुद्यानं यत्रोद्भवति भवती मालतिलते
लसत्सौरभ्यश्रीस्त्वमसि च यदा सोऽस्ति सुरभिः ।
कियद्ब्रूमो धन्ये तव च सुमनस्संपदमिमे
त्वदीक्षादीक्षातो दधति सुमनस्तां सुमनसः ॥१॥

## मल्लिकावृक्षः

निष्क्रान्ते कुसुमाकरेऽपि परितः प्रोद्दामदावानल-
व्याटोपोष्णसमीरपूरविपरिप्लुष्टेऽपि कष्टोत्तरे ।
विश्वस्मिन् प्रविसारिसौरभसमुल्लासैः सुशुभ्रद्युति-
र्ग्रीष्मे मल्लिमतल्लिके सुरभयस्येका त्वमेवेदृशी ॥१॥

---

* पाठान्तरम्–'प्रतिदिशस्यस्मासु' । † पाठान्तरम्—'श्रुतिगतः किमसौ पलाशः' ।

## करीरवृक्षः

रे रे करीर यदि नाम न तेऽस्ति पत्रं
तत्रापराध्यति परं कुसुमाकरः किम्।
दैवं विनिन्द निजमेव तु येन विश्वे-
ष्वस्मिन् द्रुमेषु विलसत्सु दशेदृशी ते ॥१॥
व्युदासि जगतीतले यदिह जाड्यमुज्जृम्भितं
व्यधायि कमलोदयो जगदमोदि येनाखिलम्।
त्वमित्थमथ निश्छदस्तरुषु संलसत्स्वेककः
करीर सुरभिस्ततः किमु तनोतु दैवं तु ते ॥२॥

## कलिन्दवृक्षः

व्योमाभोगस्थगननिपुणोच्छ्रायतस्तावकीनात्
किं नस्तावद्विकटविटपाटोपतो वा तृषः स्यात्।
एतादृशोद्विकटविटपाटोपवार्त्तानभिज्ञं
तादृक्षान्तः सरससुफलं संश्रयामः कलिन्दम् ॥१॥

## मार्गवृक्षः

आजन्मात्परकीयकार्यकरणे धौरेयतां धारयन्
स्वर्गोद्यानगतं स्वकीर्त्तिभिरधः कुर्वंश्च कल्पद्रुमम्।
तच्छीतातपवाधितोऽध्वगजनैरान्दोल्यमानोऽनिशं
श्रीमन्मार्गतरो करोषि किमहो निर्वेदमद्येदृशम् ॥१॥

## विश्रामवृक्षः

विश्रमद्रुम भवन्तमन्तरेणाद्य यातु कमिवाध्वगावली।
कोटरे गरलमुज्झतिस्फुटं यत्तव द्विरसनः स्फटोद्भटः ॥१॥

## उन्मार्गवृक्षः

मोघोऽखिलः फलभरः सुमनस्सुसङ्ग-
श्चोन्मार्गगस्य तव पान्थजनोज्झितस्य।

आत्मानपेक्षमवनीरुह काकपेयां
कूलङ्कषां श्रितवते किमु ते वदामः ॥१॥

### सरलवृक्षः

कुटजविटपिन्येवं शाखोटकेऽप्यथ शाल्मलौ
न खलु कुटिलेष्वेतेष्वेते क्षिपन्ति दृशावपि।
परुषपुरुषा यत्त्वय्येव क्षिपन्ति कुठारकं
सरल भवतः सारल्यं यत् तदेव तु दूषणम् ॥१॥

### प्रतिबिम्बवृक्षः

यत्तच्छ्रीसहकारभूरुहपतावस्मिँस्तटस्थे त्वया
दीर्घे दैर्घ्यमलं स्फुरत्किसलये रम्ये तथा त्वं तथा।
कृत्स्नं चेत्तु विडम्ब्यते तदधुना त्वस्मिन्ददाने फला-
न्येष त्वं प्रतिबिम्बभूरुह कथं मोघत्वमालम्बसे ॥१॥

### कमलम्

श्रीमत्पङ्कज मौक्तिकावलिलुठच्छम्बूकवक्षोत्सवे
तुल्यस्यैव तु राजहंसबकयोर्वर्गो निसर्गेण ते।
तत्राहंस्तपतत् विकर्त्तनकरैः प्रोल्लासितायाः श्रियः
कोशोऽयं मधुपैः प्रभुज्यत इदं पङ्कोद्भवस्योचितम् ॥१॥
त्रैलोक्यप्रतिभासनव्यसनिनो देवस्य हस्ते स्थितिः
साक्षाच्छ्रीवसतिः सुसौरभभृतिर्देवैश्च मूर्द्ध्नां धृतिः।
सत्स्वेतेषु गुणेषु पद्म तव किं नूनं जलाज्जन्म यत्
तस्यैतस्य फलं तु हंसबकयोर्या तुल्यवृत्तिः पुनः ॥२॥
के के सन्ति न वा लसत्सुमनसः सौरभ्यसंवासित-
स्वान्ताः सर्वजनस्पृहास्पदगुणाः किंत्वन्य एवास्त्ययम्।
पद्मः सद्मतया श्रियोऽञ्चितयशा नारायणोरस्तटी-
संवासव्यसनापनोदनविधौ जाग्रज्जगत्यामहो ॥३॥

सूर्यस्योदयतस्तथास्तमयतः पद्मानि भूमण्डले
स्युर्मा चाथ विकासभाञ्जि किमतस्त्रासावकाशत्त्वणः* ।
लक्ष्मीसादरवीक्षणक्षणभृतश्चाम्नायगेहात्मभू-
प्रोद्गुञ्जद्भ्रमरस्य कैटभभिदो नाभीसरोजस्य तु ॥४॥

हंसैः समं सुखचिता कमलालय त्वं
तीर्थस्थितिश्च सुमनः परिषद्वरत्वम् ।
नालीकतां भजसि तद्भवतोऽनुरूपं
राजीव जीव शरदां शतमित्थमेव ॥५॥

### कमलनालम्

पङ्काल्लब्धजनुर्ननु कोषं यत्त्वं मुखे प्रदर्शयसि ।
कण्टककलित तदेतत् सत्यं त्वं नालमेवासि ॥१॥

### पद्मिनीपत्रम्

साधु साधु ननु साधु पद्मनीपत्र तावकचरित्रमद्भुतम् ।
पङ्कसंकरपराङ्मुखस्य ते यज्जलेषु वसतिर्न तु ग्रहः ॥१॥

## अथ जलाशयादयः

### गङ्गा

जनिमिह परिप्राप्याप्येव तुषारमहीभृत-†
स्तदनु कमलातातस्योदन्वतो महिषीपदम् ।
त्वमथ निदधास्येवं मार्गे पदं यदनुन्नते
तदिह भवतीं भद्रे कः किन्नु वक्तु न वक्तु वा ॥१॥

नद्यः सन्तु सहस्रशो दिशि दिशि स्फारस्फुरद्वारयो
गङ्गैका तु हरेःपदाद्धृततनुर्ब्रह्मोदपात्राञ्चिता ।

---

*पाठान्तरम्—तत्ताहक्तपनावनव्यतिकरैर्लोके सरोजान्यहो
स्युर्मा वापि विकासभाञ्जि किमतस्त्रासावकाशक्षयः ।

† पाठान्तरम्—जनिमधिगतास्येवं गौरीगुरोरवनीभृत-

विश्वहिमक्ष्मिशवशेखरप्रणयिनी पाथोधिपूर्तिप्रदा ।
त्रैलोक्यैककृतास्पदा च जनतापापापहारव्रता ॥२॥

## नर्मदा

क्षुद्रिका तरलितं प्रयाति चेत्सा प्रयातु विशिखोदकार्जिका ।
वंशजासि ननु नर्मदे परं त्वं तरङ्गतरलं प्रतिष्ठसे ॥१॥

## तटिनी

रे रे तरङ्गतरले तटिनि स्वरूप-
मा विष्करोषि किल कूलमहो निपात्य ।
लब्धास्पदा त्वमिह, वास्तु निवारकेऽस्मि,-
न्नेतैस्तटस्थतरुभिस्तव किं विराद्धम् ॥१॥

चपलाक्षणसक्तवारिवाहप्रतिलब्धैर्ननु जीवनैः कियद्वा ।
विकटानि तरङ्गितानि धत्से धुनि शश्वन्नहि सन्ति वारिवाहाः॥२॥

गोत्रजे तटिनि किं विशङ्कटैर्निविशङ्कमभितस्तरङ्गितैः ।
प्रस्थितासि तव वा जडात्मता गोत्रतस्तदिह किं नु दूषणम् ॥३॥

मरुदेशजनः समाव्रजन्सरितं सागरपूरणक्षमाम् ।
हरिपादभुवं बिभर्तु वाप्युदभारान् कियतो वराककः ॥४॥

## क्षीरसागरः

श्रीक्षीरसागर भवन्महिमानमेते
कैरक्षरैर्ननु वदाम यदामनन्ति ।
श्रीश्रीसखामृतसुरद्रुमकामदोग्ध्री-
शुभ्रांशवस्तव तथा प्रथमानमानम् ॥१॥

क्षीराब्धेर्महिमानमामनतु वा वागस्मदीया कथं
वाचां पत्युरपि स्तवः फलति यन्निन्देति विन्दामहे* ।

---

* पाठान्तरम्—वाचां पत्युरपि स्तवः फलति यन्निन्दा सतां संमतौ ।

पीयूषेन्दुसुरद्रुमैस्त्रिजगती धन्या किमन्यद्बहु
श्रीत्येकां जलमानुषीमधिगतः श्रीमान् यतोऽभूद्धरिः ॥२॥

उदन्वन्तो रत्नाकरपदजुषो विश्ववलये
महान्तो विश्वेपीत्यवितथमिदं किन्तु स पुनः ।
विभिन्नः श्रीचन्द्रामृतपरमरत्नैरिह पयः-
पयोधिः किं वाऽन्यत् स हरिरपि यं चाधिवसति ॥३॥

## कासारः

हंसाः प्रयान्तु ननु मानसमेव ताव-
द्भृङ्गा वनानि कुसुमोल्लसितानि तानि ।
संकोचमञ्चति शरण्य सरस्त्वयि स्या-
द्राजीवजीवनविधौ हि विधा पुनः का ॥१॥

विश्वप्रयोजनपरास्वरसप्रवृत्ति-
स्तस्यां सदालिमहिता कमलोदयश्रीः ।
तत्रापि हंसपरिषत्परिशीलितत्त्वं
कासार सेयमधिकर्द्धिरहो तवैव ॥२॥

तटाक तव दूषणं ननु गुणव्यपेक्षा न य-
ज्जनस्तदिति वक्ति चेत्स खलु वक्तुमन्यामहे ।
जगन्निखिलमेव ते निजमिदं तदस्मिन् सदा
त्वयैव परिजीव्यके क्व नु गुणव्यपेक्षाक्षणः ॥३॥

## कूपः

परस्सहस्राः सलिलाशयाः स्फुरद्गभीरनीरैकसमृद्धिशालिनः ।
तदानुरूप्यात्प्रतिपूरणे परं गुणाढ्यपात्रस्य तु कीर्त्तिभाक् प्रहिः ॥१॥

दिशन्ति निजजीवनं कतिचिदन्धवो बन्धवो-
ऽध्वनीनतृषितान्तिकोपगतजीवजीवातवे ।
पथि प्रसरदध्वगान्निशि निपात्य जीवाहरा
भवन्ति च भवादृशाः कतिचिदन्धकान्धो पुनः ॥२॥

## मेघः

भीष्मग्रीष्महृतेषु जीवनिवहेष्वेके घना जीवनं
विश्वस्मिन् वितरन्ति केचन पुनः स्फूर्जन्ति चण्डं परम् ।
केचित्स्फूर्जनपूर्वकं प्रवितरन्त्यश्मच्छटामुत्कटा-
मेते मूर्द्धनि पातयन्ति परमाम्भोदास्तु वज्रं पुनः ॥१॥
यद् ग्रीष्माख्यकरालकालविकलस्त्वद्दर्शनाशावशा-
ज्जीवन्नेष कथं कथं कथमपि प्राप्तो भवद्गोचरम् ।
श्रीमन्वारिद वज्रमुज्झसि वरां यत्तत्र तत्तस्य भोः
सोऽयं चातकपोतकः फलमिदं त्वत्तो ननु प्राप्तवान् ॥२॥
जीयासुस्तव जीवनानि मुदिर ग्रीष्माभितप्तं जग-
ज्जातं-यानि पुनः पुनरमून्युज्जीवयन्त्यात्मना* ।
धिग्धिग्धिग्भवतस्तु सेव्यमपि तं वारामिहैकाश्रयं
यस्यामीषु लसत्सु पान्थनिवहस्तृष्णाकुलः क्लाम्यति ॥३॥

रे वारिवाह जलधेर्जलमर्जयित्वा
प्राप्योन्नतिं प्रतिदिशस्यथ तत्र चेत्तत् ।
शुष्यत्सु शस्यनिवहेषु जनेषु तृष्य-
त्स्वम्भोद साधु विविनक्ति क एवमन्यः ॥४॥

व्याधूतधूलिभरधूसरगन्धवाहं
धूपायितामधितपं तपनाधिबाधैः ।
धाराधर त्वमिह धीर धुरान्धराभि-
र्धाराभिरभ्यधिकमेव धिनोषि धात्रीम् ॥५॥

रे वारिदावसरतो मुहुरर्थ्यमानो
नो दत्तवानसि तदैकमपीह बिन्दुम् ।

---

*पाठान्तरम्—जीयात्तावक जीवनं मुदिर हे ग्रीष्माभितप्तं ग-
ज्जातं येन पुनःपुनरिदं प्रोज्जीवयस्यात्मना ।

कूपोदकेन तु कथंचन सस्यसिद्धा-
वव्द्धाघनाम किरसे* करकोत्करांस्त्वम् ॥६॥
चातकस्य कियती ननु चञ्चूस्तावकी च कियती न जलर्द्धिः ।
चातको घन तृषोज्झति जीवं पातकं परिगृहाण जलर्द्ध्या ॥७॥
मास्म मास्म बहुलं स्तनयित्नो श्राम्य इत्थमभितस्स्तनितेन ।
चातकस्य परमो ननु लाभो दीर्यते यदि न कर्णपुटीयम् ॥८॥

## मेघाधीशः

वादान्यकं धन्यमहो घनानामधीशितुर्यो जगतीं पिपर्त्ति ।
द्वित्रैर्यदीयैरुदबिन्दुभिस्तु प्राणित्ययं चातकपोतकोऽपि ॥१॥

## इन्द्रधनुः

सर्ववर्णरुचिरातनुस्तवोन्नत्यमत्यवनिमण्डलं पुनः ।
रे घनोदितमहेन्द्रचाप धिङ् निर्गुणोऽस्यपि च मार्गणोज्झितः ॥१॥

## नीहारः

मुग्धान्मोहय मोहय क्षणमयं मुक्तात्मतां दर्शयन्
भ्रातर्भ्रातरहो तदेतदखिलं द्राग् व्यक्ति मा यास्यति ।
सस्याग्रग्रथितप्रभातविलसच्छ्रीहारिनीहार हे
यादृक् त्वं हृदयङ्गमोऽसि च गुणे सङ्गी किमाचक्ष्महे ॥१॥

## नौका

जन्माऽवाप्यऽतिदारुणोद्यमवतो यद्वर्धकेः सङ्गत-
स्तस्मादत्र्चलाचलेषु च जलेष्वेषा त्वदीया स्थितिः ।
किं चारित्रमदः प्रतारय जनानेतांस्तु नौके परं,
न स्मः पारगताः प्रतारणपदं यायाहि यायाहि तत् ॥१॥

---

*कर्मव्यतिहारे तङ् ।

# अथ मणयः

## सामान्य मणिः

येनैवार्हति वारिधिस्त्रिभुवने रत्नाकरेति प्रथां
येनैवापि वसुन्धरेति पदवीं देवी धरित्र्यश्नुते ।
येनैवावनिचक्रवर्त्तिमुकुटस्यास्ते विभूषाविधि-
र्दैवादद्य तदेव रत्नमहह ग्राम्यश्वकण्ठाश्रितम् ॥१॥
यत्त्वं काणवराटकेन पणितो यच्चावनद्धः शुनः
कण्ठे यत् खलु खेलितश्च बहुशो बालैश्च धूलीचये ।
मा भूस्तेन हताशयो ननु न यद्विद्धोसि बद्धोधमै-
र्धोम्बैर्मौलिमणे तदेव गणयेस्त्वं भव्यमव्याहतम् ॥२॥

अस्मन्मणे त्वमिह वैकटिकेन केना-
प्यन्तर्विभर्षि जनितं तु यदा विभेदम् ।
इत्थं नु चेदिदमवाचि विवेचकेन
तर्हि तं प्रति तु संप्रति को विवादः ॥३॥

ग्राहकः क इव तेऽत्र जायतां वेदितापि ननु यत्र दुर्लभः ।
स्वस्वरूपविनिरूपणात्र का कापि याहि नृपसन्निधौ मणे ॥४॥
काञ्चनेन सह गाढसङ्गतिस्तावकी जयति तावकी यथा ।
ईदृशस्य नृपमौलिदेशतः कापरत्र वसतिः सती मणे ॥५॥

## कौस्तुभमणिः

क्षीराब्धेरुदयस्तथान्धतमसःप्रक्षालनैकक्षमा
दीप्तिः कापि सुधृताता ननु न या रत्नान्तरे वीक्ष्यते ।
दैत्यास्त्वाहितलक्ष्मलक्ष्मणजगन्नाथोरसिस्थास्नुता
श्रीमन् कौस्तुभ किं स्तुमस्तव गुणाः के के न लोकोत्तराः ॥१॥

## चिन्तामणिः

विश्वस्मिन् परिजागरूकमहिमा कल्पद्रुमो याचक-
स्तोमे कामगवीनवीकृतयशा वादान्यकश्रीक्रमैः ।
किंत्वन्तर्बुधवाञ्छितव्यतिकरे विश्राणनैकव्रत-
व्यानद्धस्त्वमिव त्वमेव सततं चिन्तामणे विद्यसे ॥१॥
अये चेतश्चिन्ताचरविषयविश्राणनविधि-
व्रतिँश्चिन्तारत्न त्वमिव भवसि त्वं त्रिजगति ।
विवेकश्चेदेकः सगुणमगुणं वाऽर्थिनमनु
अवेकः कस्त्वत्तस्तदिह तु वदान्यस्तुतिपदम् ॥२॥

## स्पर्शमणिः

रत्नानि विश्ववलये बहुशो लसन्ति
भूमीन्द्रशेखरविटङ्कविटङ्कितानि ।
स्पर्शः परं त्रिजगति त्वयमेक एव
यः स्वर्णतां नयति लोहमपि स्पृशन् सन् ॥१॥

## हीरकमणिः

हे धीर हीरक ककुम्मुखभासुरेण
किं तेजसा तव परिप्रथितेन तस्मिन् ।
आस्फाल्य यस्तु नयने नयनन्दितात्म-
म्मन्यो निभाल्य ननु काच इति व्यनक्ति ॥१॥
कोटिशः कोटिशस्सन्तु पार्थिवा जगतीगताः ।
लोहलेख्यस्तु यो नास्ति स भवान्हीर केवलः* ॥२॥
सन्ति सन्ति बहवो मणयस्ते यत्र सूचकमुखं क्रमतेऽत्र ।
एक एव तु स हीरमणिर्यः सूचकस्य मुखभङ्गविधायी ॥३॥

* पाठान्तरम्—'स भवानस्ति केवलः' ।

## पद्मरागमणिः

गुञ्जापुञ्जाऽरुणमणिरिति भिल्लानां मतोसि स तु भिन्नः।
तरुणारुणकिरणद्युतिधुरन्धरः पद्मरागमणिः ॥१॥

## चन्द्रकान्तमणिः

चन्द्रकान्तमणिरस्ति कठोरः सत्यमेव तु कलाधरयोगे।
यादृगेष सरसः किमु तावाँस्तादृशो ननु परोपि कठोरः ॥१॥

## सूर्यकान्तमणिः

सूर्यकान्त ननु कान्तव रीतिं ब्रूमहे भगवतस्तपनात्तु।
शिक्षितो यदसि वह्निविमोकं नो तमः प्रतिहतिं न च वर्षम् ॥१॥

## तरलमणिः

माध्यस्थ्यमालम्ब्य च नायकः सन् हारैकसारोपि च भास्वरश्रीः*।
श्रीमन्मणे यत्तरलेति कीर्त्तिं† बिभर्षि किं तेन न ते त्रपाऽऽस्ते ॥१॥
व्याघर्षवेधनविधिर्विविधोऽनुभूतो
यस्तादृशस्तदिह हारधुरन्धरः सन्।
एणीदृशो हृदि मुदा विलुठस्यथापि
रे मूढ केन तरलोसि न तत्तु विद्मः ॥२॥

## मौक्तिकमणिः

एणीदृशां हृदयमप्यधिरुह्य नाम
सद्वृत्तता च भवतोथ विरक्तता च।
नैवाश्नुते लवमपीह तु वैकृतं यत्
सत्यं तवास्ति ननु मौक्तिक मौक्तिकत्वम् ॥१॥
सद्वंशमौक्तिक सुरूपसुवृत्तलक्ष्मी-
स्त्वय्येव काचन तथा न यथा परत्र।

---

* पाठा०—भास्वरात्मा। † पाठा०—यत्तरलत्वमेतद्।

रूपानुरूपमखिलं भवतस्तदेत-
द्यद्राजमौलिमुकुटेषु पदं निधत्से ॥२॥

साधु मौक्तिक सुसाधु हारिणोहारिणीह वनितास्तनद्वये।
वृत्तशालिनि च वृत्तशालिनः सङ्गतं जयति तेऽन्यदुर्लभम्॥३॥

यत्त्वं दानसृजांशिरोमणिरसि प्रोदात्तवृत्तश्च यद्
यत्त्वं राजविभूषणोचितवपुस्तैस्तैर्गुणैर्हारिभिः।
तत् सत्यं, न तु मौक्तिकोत्करपरं भिल्लीमतल्लीजने
गुञ्जापुञ्जविभूषणैकरसिके तैस्तेऽवकाशक्रमः ॥४॥

सुवृत्तता विशदता तवेव तव मौक्तिक।
अन्तरेण गुणं राज्ञां नासि त्वं तु परिग्रहः ॥५॥

## भुजङ्गमणिः

हे सद्रत्न विचित्रचारिमचमत्कारैकसारास्पद-
ध्वान्तध्वंसनदक्ष रक्षसि गुणान् कः सर्वतस्तान्वदेत्।
इत्थं सत्यपि दूरतस्तु भवते कुर्मः प्रणामाञ्जलिं
यत्त्वं दुष्टभुजङ्गसङ्गतिगतो धत्से तदायत्तताम् ॥१॥

## वैरूप्यमणिः

सन्त्यन्य एव खलु केचन धातवस्ते
संशोध्यमानवपुषो ननु ये जुषन्ते।
वैरूप्य वैकृतमिह ज्वलन त्वया नः
संशोधनेऽधिकं रुचि समवेहि हेम्नाम् ॥१॥

## कृत्रिममणिः

रे रे तृणप्रणयिनो मणयो मणित्व-
सामान्यमेवमवलम्ब्य कृतं कृतं वः।

---

* पाठा०—जयति ते सुसङ्गतम्।

चिन्तामणौ तु समशीर्षिकयार्थिसार्थैः
संप्रार्थितार्पणपणप्रणयैकदीक्षे ॥१॥
ग्रामीणलोकनिवहे वह भूषणत्वं
शीर्षस्थितिं भजसि तत्र भजस्व तावत् ।
मा रात्निकेष्वपि परं प्रतिदीहशास्त्वं
स्वं रत्नभूयमिह कृत्रिमरत्न भूयः ॥२॥

## काचः

काच काञ्चनविभूषितः सुखं मूर्खराजशिरसा धृतो वसेः ।
मा परीक्षकजनाद्विभीहि भो ह्येष कुप्यति परीक्षके परम् ॥१॥
काच काचन शिरोभूतिर्यदि क्ष्माभृता तव कृता कृतास्तु सा ।
पादयोर्विलुठतीह चेन्मणिः स्यात्परीक्षकजनास्तु जानते ॥२॥
काचकुम्भ ननु काचन स्वयं स्वच्छतैव तव दूषणायिता ।
अन्तरे प्रतिनिविश्य रङ्गकैर्यद्विडम्बनपदानि लभ्यसे ॥३॥

## आदर्शः

आदर्श दर्शयसि भो वामं दक्षं च दक्षमथ वामम् ।
स्वच्छात्मतागुणास्ते वस्तुविपर्यस्तये तदयम् ॥१॥
मुकुर यथावद्वस्तुप्रतिभासनसंप्रशस्तिमर्जय भोः ।
मलिनः स्वयन्तु मलिनं भासयसि परं किमुक्तेन ॥२॥

## शङ्खः

किं ब्रूमस्तव शङ्ख भिक्षुककरे यस्त्वं वसन् वासरान्
द्वारि द्वारि परिभ्रमन्नतिनयस्येकैकमुष्टेः कृते ।
यस्यैवैष सहोदरस्तव रमानित्याधिवासे हृदि
श्रीकान्तेन निजे स कौस्तुभमणिर्देवेन संधार्यते ॥१॥
सुवृत्तता या विशदात्मता या मङ्गल्यता यापि च काचिदास्ते ।
व्यञ्जायि सर्वं ननु शङ्ख तत्ते कौटिल्यमन्तर्विकटं तु यत्ते ॥२॥

# अथ प्रकीर्णकम्

## शम्बूकः

कास्ति श्रीधरवक्त्रसङ्गमधुरः श्रीपाञ्चजन्यः क वा
कद्वत्रोटिपुटीविनिष्कुषितको गर्तैकवर्त्ती ह्ययम् ।
अन्तश्चाथ बहिर्मलीमसतनुं शम्बूकमम्बूकृतं
किं त्वं वालिश रे प्रशंससि मुहुर्जानासि जानामि तम् ॥१॥

## तुला

न त्वं तुलास्थितिमवैषि शिशो यदेत-
दौन्नत्यसत्यवति तल्लाघमानमाह ।
सुस्थूलतूलकचयस्य च काञ्चनस्य
व्यानम्रतैव तु तनोर्गरिमाणमाह ॥१॥
यद्दुर्वर्णसुवर्णयोरसि समा यन्मात्रयाप्यानता
यच्चाधः कुरुषे गुरुं लघुमथाप्युच्चं विधत्से च यत् ।
तद्रीत्यैकमयी च सूचकमुखोद्योगेषु युक्तस्थिति-
स्तत्त्वं नाम तुले नितान्तनिपुणा पण्यप्रमाणेष्वसि ॥२॥

## पारदः

कामं भवतो गौरवमभ्यधिकं विद्यतेऽन्येभ्यः ।
पारिप्लवत्वमेतत् पारद परमां त्रपां परं दिशति ॥१॥

## काश्मीरजम्

हरिद्रा हरिद्रा सुवर्णं सुवर्णं समुद्भासते तावदेवेह पुंसाम् ।
न यावत्तु काश्मीरजं तत्र दृष्टे हरिद्रा दरिद्रा सुवर्णं कुवर्णम् ॥१॥
कर्पूरे काश्मीरज आमोदिनि चेत्कटुत्वमिदमास्ताम् ।
घस्मरः पिचुमन्दोऽपि च मन्दः केन तद् वहति ॥२॥

## कस्तूरिका

दूरं दूरमिमां प्रसारयतमां मा मोदपारम्परीं
हन्तुर्मां जनकं तवैव तु कृते तेऽमी जना लुब्धकाः।
जीर्णं वा स्थितिरत्र साम्प्रतमथामोदप्रसारः पर-
स्त्वं तावद्धृदि भावय स्वयमिदं कस्तूरि कस्तूचितः ॥१॥

## कर्पूरम्

वैदग्ध्यमत्र भवतो घनसार वक्मः
किं यावदेष ननु तादृशसौरभश्रीः।
जाज्वल्यमानतनुनापि तनूनपाता
जाता न नाम विकृतिर्गुणगौरवं यत् ॥१॥

आमोदो जगदेक*कर्षणकरस्तादृक् समुज्जृम्भते
शैतल्यं नयनैकनिर्वृतिविधौ पीयूषवर्षायते।
वैदग्ध्योल्लसितश्च कश्चन तथा सारोऽस्य किं ब्रूमहे
कर्पूरस्य तु काटवेन शिशुकैर्वक्त्रं यदाकुञ्च्यते ॥२॥

## कुसुमाकरः

ब्रूमः किमेव कुसुमाकर तावकीना
या श्रीरसौ सुमनसां ननु सान्यतः क्व,।
जेगीयते जगति कोकिलचञ्चरीकै-
र्यासौ यया सुरभिताश्च दिशोदशापि ॥१॥

## वर्षा

घनमदनमन्थरवलदबालामञ्जीरमञ्जुलध्वनिनि।
गतवति हंसकुले त्वयि मण्डूका वावदूकन्ति ॥१॥
घणकुञ्जसरलचपलासक्तो विलसति घनाघनः श्यामः।
दानपतिगन्धतो नः पवनव्याधिस्तु मारयति ॥२॥

---

* पाठा०—हृदयैक।

## ज्वलनः

दुर्जातज्ज्वलन ज्वल ज्वल परं दन्दग्धि दन्दग्धि रे।
दीनानाथकुटीरकाँस्तनु तनु स्वच्छन्दलीलायितम्।
दग्धेष्वेषु कुटीरकेषु कुटिल त्वं वर्तितासे क्व वा
तद्द्रष्टास्मि समागताः खलु सखे वर्षादरिद्रा जनाः ॥१॥

## दावानलः

रे दावानल दुष्प्रभञ्जनवशाद्दन्दग्धि दन्दग्धि रे
भ्रातः सर्वजनार्थजीवनभृतो निष्कारणं पादपान्।
एतान्पल्लवपुष्पसौरभसमाहूतार्थिसार्थान् वृथा
किं वान्यत्तव युक्तद्रुमुवयुजो दुर्वंशसंघर्षतः ॥१॥

## धन्वा

धन्वन् धन्यतमोसि को ननु जनो जानाति मात्तातिगं
पारेवाक्पथमत्र वैभवमहो भावत्कमेवंविधम्।
एते चारुचमूरवः प्रतिदिशं पाथश्छटाशावशा-
द्धावन्तो मृगतृष्णिकान्तमगमन् ग्रीष्मेऽत्र भीष्मेऽपि नो ॥१॥
पुन्नागनागकेसररसालमालूरदाड़िमप्रमुखाः ।
तरवो नात्र तु दृश्या धन्वा धन्यः करीरकरवीरैः ॥२॥

## तप्तलोहगोलकः

रे रे गोलक दन्दहीपि हि जनानाऽऽध्मायमानः परं
यत्तत् स्पर्शनशालिनोपि सहसा तेजस्वितां नाटयन्।
युक्तं तत्तव तावदेतदिह रे तत्साम्प्रतं स्वद्यतां
मङ्क्ष्वेवाशनिपातसोदरतरः कूटाभिघातक्रमः ॥१॥

## ताम्बूलम्

सारे सत्यपि खादिरे खलु सुधायोगेन रागावहे
नोद्वेगेन[1] विना रुचिस्तव तु यत्ताम्बूल कोऽयं क्रमः ।
ज्ञातं नाम भुजङ्गवल्लिवलयाल्लब्धात्मनस्ते कथं-
कारं वा मुखरागिणस्तु भवितोद्वेगं विनेद्दग्रुचिः ॥१॥

## चञ्चा

भायय दण्डेन मृगाँश्चञ्चे मार्गेपि वर्तमानाँस्त्वम् ।
वृतिमुल्लङ्घ्य क्षेत्रे प्रसक्तमुष्ट्रं न भाययसि ॥१॥

## खलम्

खल विनिर्दलनं पशुभिः पदैस्तव न चेत् क्रियतामिदमीदृशम् ।
त्वदिह तद् बहुधान्यविमर्दिनो[2] जगदिदं ननु जीवतु वा कथम् ॥१॥

## आतपत्रम्

भूमीन्द्राणां शिरसि वसतिश्चन्द्रमश्चारुकान्ति-
लक्ष्म्या लक्ष्म त्वमसि परमं सा सुवृत्तत्वसम्पत् ।
ईदृग्रत्नद्युतिभिरभितो भ्राजसे किं[3] च ताप-
व्यालोपैकव्रतधृतसरस्त्वं त्वमेवातपत्र ॥१॥

## विपञ्ची

यथा गुणगणोत्तरा किमपि ते तनूरीदृशी
यथा गुणिगणैः सदा सदसि सत्कृता चाप्यसि ।
तथैव तु सुधाभरीप्रतिधुरीणसंमाधुरीं
विपञ्चि तव पञ्चमः श्रवसि सिञ्चति प्राञ्चितम् ॥१॥

---

१. परस्योद्वेगदानेन विनेति गम्यते । २. पक्षे मत्वर्थीय इनिः ।
३. पाठान्तरम्—'त्वं' ।

## दुन्दुभिः

दुन्दुभे नदनदाधि गभीरं संप्रकाशय मुहुर्महिमानम् ।
यादृशो भवसि सारमयस्त्वं नाद एव तदिदं तव वक्ति ॥१॥

## कुम्भः

मुखमाचचाम यदि कुम्भसंभव-
स्सरिदीश्वरं करपुटीकुटीरगम् ।
अयि कुम्भ किं भवति तावकः
स वा महिमा महिष्वपि निमज्जसीह यः ॥१॥

## तुम्बः

भ्रम भ्रमाहर्दिवमत्र तत्र तीर्थेषु सास्नाहि च तुम्ब नित्यम् ।
भवेऽत्र किंवा भवदीयमेतत्त्वाभाविकं काटवमन्यथाऽऽस्ताम् ॥१॥

## तितुः

आदेयहेयधरणोद्धरणेष्वरन्ध्रः
सूर्पस्तनोति यदि शब्दमसौ तनोतु ।
तत्तत्परः शतकरन्ध्रमयः समन्ता-
च्छब्दं तनोषि तु तितो त्वमपीति चित्रम् ॥१॥

## कुब्जिका

रे कुब्जिके यथा सद्वंशस्ते, ज्ञायते नाम ।
श्यामः पाणौ धृतवानिति दर्शय गौरवं तस्मै ॥१॥

## वेणुः

बहुरन्ध्रः परफूत्कृतिमुखरस्तुच्छान्तरङ्गश्च ।
कुब्जाप्रियस्यवक्त्रे लग्नस्तेनासि सद्वंशः ॥१॥

## कलमः

प्राप्याधिकारपदवीमखिलाभिलेखे
यत्कालिमानमिह शुभ्रमुखे ददासि ।
मन्ये विधिर्व्यधित तत् पुरतस्तवैत-
मेतादृशं कलम हे मुखकालिमानम् ॥१॥

## कण्टकः

सुश्लक्ष्णसूचकमुखः पादतलं संप्रविश्य विध्यसि यत् ।
तदुपानन्मर्दमुखः सत्यं त्वं कण्टकासि परम् ॥१॥

## पतङ्गः

स्नेहोच्चारः सुदशपात्रसमाश्रयोऽय-
मास्ते प्रकाश इति मास्म भवो विमुग्धः ।
रे रे पतङ्ग शुभपात्रदशाविनाशी
स्नेहस्य भक्षणपरो विदितोऽस्ति दीपः ॥१॥

## दीपः

स्नेहस्ते परमो न कस्य विदितः पात्रे, किमाख्यायता-
मेतादृक् परिभासुरत्वमितरो भावोऽनुभातीह यत् ।
ध्वान्तध्वंसविधायिता निशि यया विश्वस्य नेत्रायसे
त्वं चेद्दीप दधासि मूर्द्धनि मसीं कस्त्वां किमाख्यातु तत् ॥१॥
सद्रीतिपात्रघटितः सुदशाढ्यः स्नेहसंभृतः सुमहाः ।
उद्भासयति समन्तादेको निखिलं कुलं दीपः ॥२॥

## तमः

औपाधिकी ननु गतागतशालिता ते
विभ्रान्तिमात्रपरिकल्पितमेव रूपम् ।
नैयायिकीष्वपि पुनर्जनतासु तावत्
रे रे तमस्त्वमपि किं भवसीह भावः ॥१॥

## धनुः

या कोटिद्वयशालिता गुणगणासंगेन या नम्रता
कर्मारम्भविधौ श्रुतिप्रणयिता या विद्विषद्द्राविता ।
या लक्ष्यप्रदता च मार्गणगणे या कापि कर्मण्यता
सर्वं कार्मुकवंशजस्य भवतो वंशानुरूपं हि तत् ॥१॥
या कोटिद्वयशालिता दृढगुणासक्तिश्च या नम्रता
कर्मारम्भविधौ श्रुतिप्रणयिता या यापि सद्वंशता ।
श्रीमँश्चाप समस्तमेतदिह ते विज्ञातमुन्नद्य भोः
प्राप्तं प्राप्तमपास्यसे त्वयि मुहुर्यन्मार्गणानां गणम् * ॥२॥

## कज्जलम्

रे रे कज्जल सज्जलमपि कलुषमहो करोषि कुरु नाम ।
आदर्शस्य परन्ते कालिम्नोद्भासते शुद्धिः ॥१॥

❀ ❀ ❀ ❀

अन्योक्तिमुक्तावलि वानरैस्त्वं निर्धूयसे नीरसतां प्रकाश्य ।
पदं भवत्या नहि नाम तत्र सतां हृदो भूषणतां भजस्व ॥

दयापीयूषनिष्णाता जयन्ति भगवद्दृशः ।
यद्गोचरोऽत्र चामुत्र न देहिपदभाग् जनः ॥

❀ इति भागवताचार्यविरचिताऽन्योक्तिमुक्तावली ❀

---

* यद्वा ( पाठान्तरम् ) श्रीमँश्चाप समस्तमेतदिह ते व्यज्ञायि नम्रीभवन्
द्रागाराद्ध्रृदयं जनस्य सहसारोपैर्भिनत्स्येष यत् ॥

# शब्दार्थः

—:॰:—

( पृष्ठम् १ ) 'मङ्गलाचरणम्'—मुदिरः=मेघः । क्षणरुचिः=विद्युत् । प्रत्ययः=विश्वासः । अनवग्रहः=वृष्टिरोधरहितः । व्यनक्तु=प्रकटी करोतु ।

'ब्रह्मा'—कृतिनः=कुशलाः, विद्वांसः । जनताप्राणनविधौ =जनसमूहस्यजीवनविधाने । वेधा=ब्रह्मा ।

'शिवः'—परिणद्धः=परिवेष्टितः । पितृवनेषु=श्मशानेषु । शरजन्मः=कार्त्तिकेयः । बर्ही=मयूरः ।

( पृष्ठम् २ ) 'वायुः'—प्रतिष्ठोदयः=सत्तायाः विकासः । विश्लेषे =सम्बन्धाभावे । अश्मनिभता=पाषाणसादृश्यम् । बिभूषे=धारयसि । भावत्कसौरभविसारणम्=भवदीयसुगन्धिविस्तारणम् । त्वदुपगाः=भवत्समीपस्थाः ।

( पृष्ठम् ३ ) 'वायुः'—व्याजृम्भमाणम्=प्रसरणशीलम् । वावाहि=पुनः पुनः वाहि । वातूलः=वात्या, प्रचण्डवायुः ।

'जलम्'—प्रमाथः=अनौचित्यम् ।

'पृथिवी'—उपधृता=धारणविषयीभूता । व्यतिक्लाम्यसे= अतिशयेन खिन्ना भवसि ।

( पृष्ठम् ४ ) 'सूर्यः'—विद्रुतानि=पलायितानि । विनिबर्हणः= नाशकः, निवारकः । विसृमरः=प्रसरणशीलः । नैद्रविद्रवकृता= निद्राहारिणा ।

'चन्द्रः'—व्याहारैः=शब्दैः । चकाधि=दीप्यस्व ।

(पृष्ठम् ५ ) 'अगस्त्यः'—चुलकयेत्=चुलुकीकुर्यात् । वातापि= राक्षसविशेषः । विनिभालितौ=विशेषेण दृष्टौ ।

'कुविन्दः' ( तन्तुवायः )—सिचयानाम् = वस्त्राणाम् ।

( पृष्ठम् ६ ) 'कुविन्दः'—वास्तव्यम्=निवासस्थानम् ।

'मालाकारः'—पुन्नागः = नागकेसरः ।

( पृष्ठम् ७ ) 'मालाकारः'—पिचुमन्दः=निम्बः । वागुरा=मृग-बन्धनी ।

'महिषपृष्ठस्थोबालः'—कीनाशः = यमः ।

'मत्स्याजीवी'—भावजनाय = भक्तजनाय ।

( पृष्ठम् ८ ) 'पान्थः'—सुमम्=पुष्पम् ।

'ग्राम्यः'—करिसदः प्रतिवाचः=गजसभायाः प्रत्युत्तराणि ।

'तालारोहकः'—ग्रहिलेन = हठिना ।

'सिंहः'—कुट्टाकता = भङ्गकारिता ।

( पृष्ठम् ९ ) 'सिंहः'—प्रस्यन्दि=प्रवहणशीलम् । संरम्भः=आतुरता । फेरवः=शृगालाः ।

'गजः'—स्तम्बेरम = हे गज । आयतिष्ट=प्रयत्नमकरोत् ।

( पृष्ठम् १०) 'गजः'—पारीन्द्रात् = सिंहात् । पृथुकात्=बालात् । सान्द्रसान्द्राम्=घनतराम् । विटङ्कम्=कपोतपालिका ।

( पृष्ठम् ११ ) 'वृषभः'—धूर्वहता = भारवाहकता । धौरेय=धुरन्धर । प्रावीवृतम् = प्रावर्तयम् ( अहम् ) ।

'अश्वः'—मन्दुरा = अश्वशाला । कूटावस्करकेषु = पुरीपराशिषु । गन्धर्व = अश्व ।

'रासभः'—गर्दसि = शब्दं करोषि ।

( पृष्ठम् १२ ) 'रासभः'—रासि = शब्दं करोषि । सैंहीं=सिंह-सम्बन्धिनीम् ।

'मृगः'—प्रचारिकाम् = भ्रमणम् ।

( पृष्ठम् १३ ) 'मृगः'—प्रतिगाः = प्रतिकूलं गच्छेः । अद्धा = तत्वतः । पुष्कलक=अतिशोभन । प्रवलगसि = प्रगच्छसि ।

'महिषः'—सैरिभ = महिष।

'उष्ट्रः'—दासेरकम् = उष्ट्रम्। अकाण्डे = अनवसरे। संयमनिका = यमपुरी।

( पृष्ठम् १४ ) 'उष्ट्रः'—पित्सित=पतितुमिष्ट। स्थगुः=कुब्जता ( कूबड़ )।

'तरक्षुः' ( मृगादनः, वृको वा )—उत्फालः=ऊर्ध्वगतिः।

'श्वा'—अलर्क=उन्मत्तकुक्कुर। जोषम्=तूष्णीम्।

( पृष्ठम् १५ ) 'शृगालः'—अध्यासिषता = उपविष्टानि। क्ष्माभृत्=पर्वतः।

'वानरः'—कूपारः = समुद्रः।

( पृष्ठम् १६ ) 'वानरः'—विधुनु = कम्पय।

'वैनतेयः' (गरुडः)—क्ष्वेडः = विषम्। परिग्रहः = परिजनः।

'हंसः'—मरवः = मरुस्थलानि। अनपत्रपम् = लज्जाहीनम्। कह्वः = बकः। समीहसे=संचेष्टसे।

( पृष्ठम् १७ ) 'हंसः'—नालीके = कमले। अनवद्यम् = श्रेष्ठम्।

'शुकः'—घुष्टम् = शब्दनम्। भवे = शिवे। प्राचि=प्राक्समये।

( पृष्ठम् १८ ) 'शुकः'—प्रयुञ्जानाः = प्रयोगं कुर्वाणाः। मृगयवः =व्याधाः। विकिरसि = विक्षिपसि।

'कोकिलः'—उररीचकार = स्वीकृतवान्। करट = काकः।

( पृष्ठम् १९ ) 'चातकः'—वेल्लत् = कम्पमानम्।

'चकोरः'—विरज्यसि=विरक्तो भवसि। विसरः=समूहः।

'चक्रवाकः'—विस्रसा = जरा।

( पृष्ठम् २० ) 'बकः'—कह्लारम = कमलम्। समुच्चञ्चनाम् = सम्यक् कम्पनम्। प्रह्वम् = नम्रतापूर्वकम्।

'काकः'—काकोल = द्रोणकाक ( डोमकौआ )। माकन्दः = आम्रः। कलिता = मिश्रिता। कल्यते=कथ्यते।

( पृष्ठम् २१ ) 'काकः'—अमेध्यम्=अपवित्रम् ।

'उलूकः'—वावदूकः=वाचालः । अचकलः=स्वीकृतवान् । चञ्चूर्य्यते=अतिशयेन गम्यते ।

( पृष्ठम् २३ ) 'भृङ्गम्'—व्रतव्यतिकरम्=व्रणसमूहम् । प्रसृमरप्रवेणिका = प्रसरणशीलप्रवाहः । व्यगाहि=आश्रिता । सद्कारि=सत्कृतः । माध्वीकम्=मधु । मारवे=मरुस्थलीये ।

'खद्योतः'—विसृमरः=प्रसरणशीलम् । ध्वान्तम्=अन्धकारः ।

(पृष्ठम् २४) 'मशकः'—परिनिष्ठिताः=कुशलाः । तिष्ठासवः= स्थातुमिच्छवः ।

'सर्पः'—कुलाचलाः=कुलपर्वताः । भर्त्तव्यांभर=रक्षणीय-रक्षणम् ।

( पृष्ठम् २५ ) 'मूषकः'—मोषं मोषम्=चोरयित्वा । आखो= मूषक । धुर्यः=भारवहः ।

'तिमिङ्गिलगिलः' (महामत्स्यविशेषः)—दत्तझम्पे=कृतकूर्दने । अकूपारः=समुद्रः ।

( पृष्ठम् २६ ) 'मकरः'—बावाधसे=अतिशयेन बाधसे । आपातात्=पतनात् । आजिपरमः=युद्धकुशलः ।

( पृष्ठम् २७ ) 'सामान्यपर्वतः'—द्रवीयसि=अतिशयदूरे । स्फारम्=बहुलम्, विकटम् ।

'हिमवान्'—सुरस्रवन्तीम्=गङ्गाम् । सरस्वान्=नदः, समुद्रो वा ।

( पृष्ठम् २९ ) 'मैनाकः'—स्तभ्नासि=जडीभावं नयसि ।

'कल्पवृक्षः'—व्यधात्=अकरोत् ।

( पृष्ठम् ३० ) 'चन्दनवृक्षः'—निविष्टपदः=स्थापितचरणः । पुरन्ध्रि=स्त्रि ।

( पृष्ठम् ३१ ) 'आम्रवृक्षः'—सन्नाहः=कवचः । विश्वपरि-चङ्क्रमखेदहानम्=संसारपरिभ्रमणक्लेशनाशम् ।

( पृष्ठम् ३२ ) 'अशोकवृक्षः'—प्रेयोलोकाः = अतिप्रियजनाः । व्यतिकरि = समूहवान् ।

( पृष्ठम् ३३ ) 'बकुलवृक्षः'—अनुक्षणम् = प्रतिक्षणम् । व्यसनिता=स्वभावः । चचार = कृतवान् । चारो (चारो बकुल)=सुन्दर ।

'भूर्जवृक्षः'—प्रचिपक्ष्म = सहित्या ।

'निम्बवृक्षः'—पिचुमन्द=निम्ब । अनुविन्दसि=प्राप्नोसि ।

'नारिकेलः'—प्रतीयाः = प्रतीतिं गच्छेः ।

(पृष्ठम् ३४) 'शिरीषवृक्षः'—विकर्त्तनः = सूर्यः । कल्पः=प्रलयः । परिदुर्गतेषु=दुर्गतिप्राप्तेषु ।

( पृष्ठम् ३५ ) 'पनसवृक्षः'—शिष्यते = अवशिष्टो भवति ।

'अश्वत्थवृक्षः'—व्यनक्ति = अभिव्यक्तिं करोषि ।

'द्राक्षालता'—पाकात् = रोगविशेषात् ।

( पृष्ठम् ३६ ) 'अर्कवृक्षः'—त्वकम् = त्वम् ।

( पृष्ठम् ३७ ) मल्लिकावृक्षः—व्याटोपः = आडम्बरः । विपरिप्लुष्टे = संज्वलिते । प्रविसारि = प्रसरणशीलम् । मल्लिमतल्लिके= मल्लिश्रेष्ठे ।

( पृष्ठम् ३८ ) 'करीरवृक्षः'—व्युदासि = विक्षिप्तम् ।

'कलिन्दवृक्षः'—उच्छ्रायतः = उद्गतः ।

'विश्रामवृक्षः'—स्फटाः = फणाः ।

'उन्मार्गवृक्षः'—मोघः = विफलः ।

(पृष्ठम् ३९) 'उन्मार्गवृक्षः'—काकपेयाम् = काकैः पातुं योग्याम् ।

'सरलवृक्षः' ( देवदारुवृक्षः )—शाखोटकः=वृक्षविशेषः ।

'प्रतिबिम्बवृक्षः'—मोघत्वम् = वैफल्यम् ।

'कमलम्'—अञ्चितयशाः = पूजितकीर्तिः ।

( पृष्ठम् ४० ) 'कमलम्'—क्षणभृतः = उत्सवधारिणः । सुमनःपरिषद्वरत्वम् = पुष्पसमूहश्रेष्ठत्वम् । नालीकताम् = कमलत्वम् ।

( पृष्ठम् ४१ ) 'नर्मदा'—विशिखोदकार्जिका = तीक्ष्णजल-प्रवाहशीला ।

'तटिनी'—विराद्धम् = अपराद्धम् । वराकक:=भाग्यहीन: ।

'क्षीरसागर:'—विन्दामहे = लभामहे ।

( पृष्ठम् ४२) 'क्षीरसागर:'—उदन्वन्त: = समुद्रा: । अवितथम् = सत्यम् ।

'कासार:'—स्वरसप्रवृत्ति: = स्वाभाविकप्रवृत्ति: । परिजीव्यके = जीवनीये । व्यपेक्षाक्षण: = आश्रयावसर: ।

'कूप:'—प्रहि: = कूप: । जीवातवे=जीवनौषधयाय ।

(पृष्ठम् ४३) 'मेघ:'—स्फूर्जन्ति = गर्जन्ति । उज्जीवयन्ति = प्राणयुक्तं कुर्वन्ति । विविनक्ति=पृथक्करोति । व्याधूत: = कम्पित: । तपनाधिबाधै: = सूर्यसन्तापै: । धिनोषि=प्रसादयसि ।

(पृष्ठम् ४४) 'मेघ:'—जलर्द्धि: = जलसम्पत्ति: । स्तनयित्नो = मेघ । दीर्यते = विदीर्णा भवति ।

'मेधावीश:'—पिपर्ति=पालयति ।

'नीहार:'—द्राग् = झटिति । श्रीहारि=शोभाहरणशील: ।

'नौका'—वर्धकि=तक्षा (बढ़ई) । चारित्रमद: = चरितगर्व: । अरित्रमद: = कोनिपातक (पतवार)-गर्व: । प्रतारणपदम् = वञ्चनस्थानम् ।

( पृष्ठम् ४५ ) 'सामान्यमणि:'—अश्नुते=व्याप्नोति । वराटक:=वटी (कौड़ी) । पणित: = व्यवहृता । अव्याहतम्=अक्षतम् । भव्यम् = सौन्दर्यम् । वैकटिकेन = रत्नपरीक्षकेन ।

'कौस्तुभमणि:'—सुवृत्तता = सुवर्तुलता । स्थास्नुता = स्थायिता ।

( पृष्ठम् ४६ ) 'चिन्तामणि:' - कामगवी = कामधेनु: । वादान्यक: = उदार: । व्यतिकर: = प्रसङ्ग: । विश्राणनम्=दानम् ।

'स्पर्शमणिः'—शेखरविटङ्कविटङ्कितानि = मुकुटरूपकपोतपालिकास्थिरीकृतानि ।

'हीरकमणिः'—परिप्रथितेन = प्रसिद्धेन । निभाल्य = दृष्ट्वा । मुखभङ्गविधायी = मुखभञ्जकः ।

(पृष्ठम् ४७) 'सूर्यकान्तमणिः'— विमोकम् = विमुक्तिम् । तमः = राहुः । वर्षम्=वृष्टिः ।

'तरलमणिः' - व्याघर्षः=घर्षणम् । एणीदृशः=स्त्रियः ।

'मौक्तिकमणिः'— अश्नुते = प्राप्नोति । वैकृतम्=विकारम् । सुवृत्तम्=सुचरित्रम्, सुवर्तुलत्वम् ।

( पृष्ठम् ४८ ) 'भुजङ्गमणिः'— चारिमा=सौन्दर्यम् । दृप्तः = अभिमानी, प्रचण्डः । आयत्तताम् = अधीनताम् ।

( पृष्ठम् ४९ ) 'कृत्रिममणिः'— समशीर्षिकया = समकक्षतया । सार्थः=समूहः । प्रतिदीदृशः=दर्शयेः ।

'काचः' — रञ्जकैः = रागप्रतिपादकैः ।

'शङ्खः' - व्यज्ञायि = ज्ञातम् ।

(पृष्ठम् ५०) 'शम्बूकः'—विनिष्कुपितकः = विच्छिन्नः । अम्बूकृतम्=जलशब्दविशेषयुक्तम् ।

'तुला'— आनता=नम्रीभूता । सूचकः = तुलाकण्टिका, पक्षे पिशुनः ।

'पारदः'—पारिप्लवत्वम् = चाञ्चल्यम्, तरलत्वम् ।

( पृष्ठम् ५१ ) 'कस्तूरिका'—मोदपारम्परीम् = सुगन्धिप्रसङ्गम् । जनकम् = कस्तूरिकामृगम् । जोषम्=मौनम् ।

'कर्पूरम्'—तनूनपाता=अग्निना । निर्वृतिः = शान्तिः, सुखं वा । काटवेन=कटुतया ।

'वर्षा' – वलत्=रणत् । वावदूकन्ति=अतिशयं शब्दायन्ते । दानपतिगन्धतः=गजमदगन्धतः ।

(पृष्ठम् ५२) 'दावानलः'—समाहूतार्थिसार्थान् = आकारितयाचकसमूहानि । उद्भवयुजः = उत्पत्तियुक्तस्य ।

'धन्वा' ( मरुस्थलम् )—मानातिगम्=प्रमाणरहितम् । पाथश्छटा=मृगमरीचिका । मालूरः=विल्वः ।

'तप्तलोहगोलकः'—आध्मायमानः=वायुयुक्तः क्रियमाणः । मङ्क्षु=शीघ्रम् । कूटः=लोहमुद्गरः ( हथौड़ा ) ।

(पृष्ठम् ५३) 'ताम्बूलम्'—खादिरे=खदिरसम्बन्धिनि । नोद्वेगेन=उद्वेगरहितेन ।

'चञ्चा' ( तृणमयः पुमान् )—वृतिः = सीमा ।

'खलम्'—विमर्दिनः=मर्दनशीलात् ।

'आतपत्रम्'—व्यालोपः = नाशः ।

( पृष्ठम् ५४ ) 'कुम्भः'—प्रहिः = कूपः ।

'तुम्बः'—काटवम् = कटुत्वम् ।

'तितुः' ( चालनी )—आदेयम् = ग्राह्यम् ।

( पृष्ठम् ५५ ) 'कलमः'—व्यधित = कृतवान् ।

'कण्टकः'—सुश्लक्ष्णम्=सुसूक्ष्मम् । सूचकः=सूचिका पिशुनश्च ।

'पतङ्गः'—दशा = वर्त्तिका ।

'दीपः'—परिभासुरत्वम् = तेजस्वित्वम् । अनुभाति = अनुदीप्यते । सुदशाढ्यः = सुन्दरवर्त्तिकासमृद्धः ।

'तमः'—औपाधिकी=उपाधिजन्या ।

(पृष्ठम् ५६) 'धनुः'—विद्विषद्द्राविता = शत्रुपलायनकारिता । मार्गणः= बाणः । आराद् = दूरसमीपयोः ।

❀ ❀ ❀ ❀ ❀

निर्धूयसे = तिरस्क्रियसे ।

अमुत्र=तत्र ( परलोके ) ।

———